KĀVYAMĀLĀ. 35.

# THE ALAÑKĀRASARVASVA

OF

## RĀJĀNAKA RUYYAKA

**With the Commentary of Jayaratha.**

EDITED AND REVISED

WITH A HISTORICAL INTRODUCTION

BY

PANḌIT GIRIJĀPRASĀD DVIVEDI.
PROFESSOR, MAHARAJA SANSKRIT CALLEGE, JAIPUR.

Second Edition.

PUBLISHED BY

PĀṆḌURAÑG JĀWAJĪ,

PROPRIETOR 'NIRṆAYA SĀGAR' PRESS,

BOMBAY.

1939.

*Price 1¼ Rupee.*



काव्यमाला ३५.

राजानकरुय्यककृतम् ।

# अलंकारसर्वस्वम् ।

जयरथकृतया टीकया समेतम् ।

जयपुर-राजकीयसंस्कृतपाठशालाध्यापकेन श्रीगिरिजाप्रसादद्विवेदेन

प्रस्तावनादिभिः परिष्कृत्य संशोधितम् ।

द्वितीयं संस्करणम् ।

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा

प्राकाश्यं नीतम् ।

शाकः १८५९, सन १९३९.

मूल्यं १। रूप्यकः ।



# प्रस्तावना.

अथेदं साहित्यापरपर्यायमलङ्कारशास्त्रं शब्दार्थनिबन्धनस्य कविकर्मणः शासकमिति सुप्रतीतं तद्विदाम् । अत एवास्य शब्दानुशासनवत् काव्यानुशासनमिति नामान्तरव्यवहारोऽपि सार्थकतामापद्यते । एतच्च काव्यानुशासनं प्राचीनैरलङ्कारतन्त्रसूत्रधारैर्भामहोद्भटप्रभृतिभिरलङ्कारशास्त्रत्वेन तथार्वाचीनैरष्टादशविद्यानां सहभावभावानुरूपेण साहित्यशास्त्रत्वेन च व्यवहृतम् । इत्थमयमलङ्कारशब्दो भाव–करणव्युत्पत्तिमहिम्ना साहित्यशास्त्रे, उपमाद्यलङ्कारेषु च व्यवहारपदवीमारूढ इति स्थेयानां विमर्शः । 'प्रधाने हि व्यपदेशा भवन्ती'ति न्यायनयेन अलंक्रियतेऽनेन इति करणव्युत्पत्त्यापि शास्त्रवाचकता निर्बाधैव ।

अथ प्रकृतेऽलङ्कारशास्त्रस्य प्रादुर्भावकाले विचार्यमाणे यद्यपि मौलिकं गवेषणं दुःशकमेव प्रतीयते तथापि सुदूरमवधारणेन तत्रभवतोभरतमुनेर्नाट्यशास्त्रमेव प्राथम्येन विवेकपथमवतरति । यत एतदुत्तरमेव यावदुपलभ्यमाना प्राञ्चः साहित्यसंदर्भा लब्धजन्मान इति पुरावृत्तपरीक्षणेन निष्प्रत्यूहं प्रतिष्ठते । भवतु नाम । इदानीं किमिदं नाट्यशास्त्रं, तच्च कथं प्रवृत्तम् ? को वास्य प्रवर्तक इति संक्षिप्य विविच्यते, येनात्रोपक्रान्तोऽलङ्कारशास्त्रस्याविर्भावसमयोंऽशतः सुखसाध्यः स्यात् ।

नाट्यं नाम नटवृत्तम्—तस्य च शासनोपायपरं शास्त्रमेव नाट्यशास्त्रमित्युच्यते । यत्र खल्वधिगतविशेषो नटः स्वकर्मणि पटूभवति । नाट्यञ्च नटधर्मत्वात्तैः स्वतोऽनुष्ठेयं वस्तु, न पुनस्तेषां कश्चिदुपदेष्टा प्रेरको वा, न वा तानुद्दिश्य वैदिको लौकिको वा विधिर्विनियुज्यते । एवं तर्हि नाट्यशासनोपदेशे नटस्य को लाभ इति चेत्, केवलं प्रत्युपकारमात्रमनेन निर्वर्त्यत इति सहृदयाः । नाट्यस्योत्पत्तिचिन्तायां तु प्रथमतो नाट्यवेद एवाङ्कुरित इत्यवगम्यते । स च लोकहितैषणया स्वयंभुवा भगवते भरतायोपदिष्टः । तेन च महेन्द्रविजयोत्सवे स सर्वोऽपि यथायथं प्रयोगभूमिमवतारितः । अथ च प्रश्नप्रतिवचनभङ्ग्या तदाधारेण—

'नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते ।
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः ॥'

इत्युक्तरूपं प्रश्नपञ्चकं प्रधानीकृत्य कविप्रयोक्त्रोरुपदेशार्थं नाट्यशास्त्रं निर्मि-

तवान् । इदञ्च लक्षणपरीक्षापरं ब्रह्मणो निदेशेन त्रेतायुगे भरतो निरमादिति प्रथमाध्यायारम्भे सार्ववर्णिकस्य नाट्यवेदस्येतिवृत्तं निरूपयतस्तदुक्त्यैव निश्चीयते । अस्मिन्नेव युगे एतदवतारे त्विदं बीजम्—सत्त्वप्रधाने कृतयुगे स्व-स्वधर्मारूढो मनुष्यवर्गः सुखदुःखे समानधिया व्यवहरति । तत्र युगस्व-भावाभिभूतस्य तस्य सुखदुःखयोर्हेयोपादेयतां प्रति प्रवृत्तिरेव नोदेतीति न तत्रोन्मुखीभावावसरः । ततो रजोबहुले त्रेतायुगे तु राजसप्रवाहपतितो मानवनिवहश्चलस्वभावापन्न एकान्ततः सुखलिप्सोन्मुखो दुःखहानेच्छुकश्च भवति । परमसौ राज्ञा नियन्त्रितव्यवहारः शास्त्रीयेषु क्रियाकलापेषु नान्यथात्मानं विसृजति । एवं च तादृशः कश्चन मार्गो बोधनीयो यत्रैते निष्प्रेरिता अपि प्रवर्तेरन्निति महेन्द्रप्रमुखैरभ्यर्थितः पितामहस्तदुपायस्वरूपं नाट्यमवतारयामास । यथैते क्रीडनीयकलुब्धा दुःखासहिष्णवो मा भूवन्निति धिया तैर्नाट्यमभ्यर्थितमित्युत्पत्तिसंक्षेपः । तदित्थमस्य त्रेतायुगीयत्वं सोपपत्तिकमपीति गमकान्तरान्वेषणपरैः पर्यालोच्यम् ।

ये तु वेदवन्नाट्यस्यानादित्वं मन्वते तेषां मतेऽत्रोपनिबद्धा उत्पत्त्यादिशब्दाः स्मरणादावुपचारकल्पनया कामं संगच्छन्ते । परमेषां दीर्घदीर्घतरानुधावने कोऽयमभिनिवेश इति न वयं विवेक्तुं प्रभवामः । एवमेव कतिपये प्रश्नोत्तर-परेष्वारम्भश्लोकेषु सङ्गतिवैधुर्यमुद्भाव्य विसंवादं प्रतिक्षिपन्तो नाट्यवेदो नाट्यशास्त्रमिति परस्परं परस्परस्य पर्यायाविति मन्यन्ते । त एते विरोधाभासभीरवोऽभिनवभारत्यां[1] महामाहेश्वरैराचार्याभिनवगुप्तपादैः[2] सम्यक् प्र-

---

१ Gaekwar's Oriental Series' ग्रन्थावलौ प्रकाशिता ।

२ अस्य महतो विद्यावंशप्रवर्तकस्य कश्मीरजन्मनो महात्मनः स्थितिकालस्तु—

'इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे
तिथि शशिजलधि(४११५)स्थे मार्गशीर्षावसाने ।'

इति बृहत्प्रत्यभिज्ञाविमर्शिनीतो ज्ञायते । अयं लौकिकाब्दस्सतो गणनया खिस्ताब्दीयदशमशतकोत्तरार्धे वर्तमान आसीत् । अस्य च मातापितरौ **विमला–नरसिंहगुप्ता**विति तदीयग्रन्थराशिभ्यः स्फुटमेव । तथाचाभिनवभारत्यां दशमाध्यायान्ते—'इत्थं दशममध्यायं व्याचष्टे च समाप्तिः । शिवस्मृतिकृतार्थोऽपि परार्थं दुःखलात्मजः ॥ इति पितुर्नामनिर्देशो लेखकप्रमादपतितः । यतः षष्ठाध्याये 'तत्र हास्याभासो यथाऽस्मत्पितृव्यस्य वामनगुप्तस्य' इति निर्देशेनाप्यस्य वंशे गुप्तान्तमेव नामकरणं प्रथितमवसीयते ।

स्युक्ताः । युक्ततरञ्चैतदुत्पश्यामः । अन्यथाकलने तु—

'य इमं शृणुयात्प्रोक्तं नाट्यवेदं स्वयंभुवा ।
कुर्यात्प्रयोगं यश्चैनं तथाधीयीत वा नरः ॥
या गतिर्वेदविदुषां या गतिर्यज्ञवेदिनाम् ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयात् तु सः ॥'

इति शास्त्रान्ते पठ्यमानं कथमिव संगच्छेत ?

अस्मिंश्च चतुर्वेदाङ्गसंभवे नाट्यशास्त्रे श्रव्य–दृश्यरूपस्य कविव्यापारस्य निरूपणेऽपि विशेषतो दृश्यकाव्यमेव सपरिकरं निरूपितम् । तथा च प्रातिस्विकतया दृश्यकाव्यमुद्दिश्य तदुक्तिः—

'जग्राह पाठ्यं ऋग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥' (अ. १ श्लो. १७)

अयमर्थः–त्रैश्वर्यप्रधानाद् ऋग्वेदादभिनयप्रधाने पाठ्ये प्रथमं त्रिस्वरासञ्जनं, तदुत्तरं सामवेदात्प्रयोगप्राणभूतं गीतं संगृहीतम्, ततश्चाध्वर्यवकर्मप्रधानाद् यजुर्वेदादङ्गाभिनयान्, आथर्वणाच्च रसान् जग्राह । अत्र च—

'स्वाति-नारदसंयुक्तो वेदवेदाङ्गकारणम् ।
उपस्थितोऽहं लोकेशं प्रयोगार्थं कृताञ्जलिः ॥' (अ. १ श्लो. ५२)
'यथोक्तं मुनिभिः पूर्वं स्वाति-नारद-पुष्करैः ।' (अ. ३४ श्लो. २)

इत्येवं परिगणिता अन्येऽपि नाट्याचार्या नामतः श्रूयन्ते । त एते भरतस्य सहयोगिनो भवेयुरिति संभाव्यते । किंच भरतान्तेवासिभिः कोहलादिभिरपि भरतोक्तीः परिष्कृता इत्याद्यभिनवभारतीतो विज्ञायते । विज्ञायते च नान्यदेवप्रणीतं कश्चिद् भरतभाष्यमपि, यदभिनवगुप्तैः पञ्चमाध्याये प्रमाणत्वेन न्यस्तम् (अभिनवभारती पृ. २५५) । एवमस्य शास्त्रस्य लोकप्रियत्वं भूयसीभिष्टीकाटिप्पणीभिर्निःसंशयं सिध्यति ।

अत्रायं निष्कर्षः—नाट्यशास्त्रस्य त्रेतोत्पत्तेर्निःसंदिग्धतया तदेव तावत्पूर्वं प्रभवतीति निर्विवादम् । एवमेतदाधारेणैव काव्यालङ्कारविषया भामहाद्युत्तरग्रन्थेषु निबद्धा इत्यपि सुस्पष्टम् । एतदुत्तरं तु भगवतो वेदव्यासस्याग्निपुराणात् साहित्यविषया गृहीता इति भामहादिप्राचीनप्रबन्धसंवाददर्शनेन

सुदृढं प्रतिपत्तुं शक्यमिति किं बहुना। यथा चैतदुपपद्यते तथा साहित्यदर्पणभूमिकायामस्मत्तातपादैर्विशदीकृत्य निरूपितमेवेति जिज्ञासुभिस्तत एवावगन्तव्यम्। इयता नाट्यवृत्तं, तत्कालकलनाश्च ईषदुन्मील्य,

'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥'

इति भरतोक्तिं तथा—

'न स शब्दो न तद् वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहोभारो महान् कवेः॥'

इति किंचित्परिवर्तिताकारां तत्सहधर्मिणीं भामहोक्तिं चोपक्षिप्यातो निवर्तामहे।

अथ च श्रव्यदृश्यरूपतया द्विधाभावमापन्ने चमत्कारसारे काव्यशरीरे उत्कर्षहेतवो गुणरीत्यलङ्कृतयो मनाक् विविच्यन्ते—यद् व्यतिरेकेण सहृदयाः शब्दार्थयुगलस्य कविकर्मणो रसास्वादसुखाय नालंकर्मीणाः।

तत्र तावद्गुणो नाम रीत्यलङ्काराभ्यामन्तरङ्गो रसवृत्तिर्नैसर्गिकः कश्चन धर्मः। तस्य च परमार्थतो रसैकनिष्ठतायामपि तदभिव्यञ्जकशब्दार्थनिष्ठतेति सर्ववादिनामभ्युपगमः। अत एव च 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता।' इत्यभियुक्तोक्तिः। इतरथा नीयमाने तु 'मधुरः शब्दो मधुरोऽर्थः' इति लोकयात्रा विपर्यस्ता भवेत्। यच्च वामनः—माधुर्यादयो गुणाः वर्णादिधर्माण इत्यशिश्रियत्, तदुपचारकोटिप्रवेशनेन नासमञ्जसम्। तदित्थं गुणरहिते कविकर्मणि काव्यपदस्य भक्त्या प्रयोगः। नाट्यशास्त्रे—

'श्लेषः प्रसादः समता समाधि
माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च
कान्तिश्च काव्यस्य गुणा दशैते॥' (अ. १६ श्लो. ९६)

इत्येतावन्तो गुणा लक्षिताः। एत एव च दण्डिनः काव्यादर्शे वामनस्य काव्यालङ्कारसूत्रेषु च लक्ष्यन्ते। भामहप्रबन्धे तु माधुर्योजःप्रसादातिरिक्ता गुणान्तरसंक्रान्तिर्नाधिगम्यते। तन्मन्ये, अत एव शिक्षितैर्मम्मटादिभिर्भरताद् वामनान्ताकलिताः सर्वेऽपि गुणास्त्रिष्वेव क्रोडीकृता भवेयुः। भोजविद्याना-

थादयस्तु चतुर्विंशतिगुणानाहुः। तदेतदास्तां तावत्, पूर्वोक्तो माधुर्योजःप्रसादभेदभिन्नस्त्रिविधोऽपि गुणयोगो यथावसरं काव्योत्कर्षघटनायै नोपेक्षणीयः। तथा च भोजदेवः—

'अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम्।
गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः॥' इति।

तत्समानमानो वामनोऽपि—

'युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनहीनमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते॥'

एवं सत्यपि गुणविरहे यद्यलङ्काररीत्योरन्यतरः प्रतिष्ठेत चेत्तदापि स्वभावतश्चमत्कृतिस्पर्शे काव्यत्वं जागरूकमेव। किंच गुणरीत्यलङ्कृतीनां मध्ये यस्य कस्यचन प्राधान्यसत्त्वेऽपि स्वभावतया परः संश्लिष्यत एवेत्यपि परीक्ष्यम्।

गुणाभिव्यञ्जकपदसंघटना रीतिरित्युच्यते। सा च तत्तद्देशप्रभवनिबन्धनाभिर्वैदर्भी–गौडी–पाञ्चालीति संज्ञाभिः प्राधान्येन त्रिधा विभज्यते। एता गुणसहचारिण्योरसादीनामुत्कर्षघटयित्र्यश्च भवन्ति। ता इमास्तिस्रोऽपि प्रायेण गुणपरतन्त्रा एव गण्यन्ते, क्वचित्तु स्वातन्त्र्येणापि चमत्कारकारिण्यः। उद्भट–मम्मटादिभिस्त्वेता उपनागरिका–परुषा (ग्राम्या) कोमलेति च संज्ञान्तरैराख्याताः। वामनेनासां तत्तद्देशप्रभवमूलिका संज्ञेति प्रतिपन्नम्। तथा च तत्सूत्रम् 'विदर्भादिषु दृष्टत्वात्तत्समाख्या।' (१ अधिक. २ अध्या. १० सू.) तदन्ये न क्षमन्ते। ततोऽन्यत्राप्यासां प्राचुर्येण दर्शनात्। ततः पूर्वाचार्यसंज्ञेति मन्यन्ते। एष एव पक्षो युक्तियुक्तः प्रतिभाति। रीतिमधिकृत्य साहित्यमीमांसायां त्वित्थं मीमांसितम्—

'पाञ्चाली गौडिकामध्ये यथा रीतिं न मन्वते।
तथा वैदर्भपाञ्चाल्योः केचिन्मध्यां न शासति॥
केचिन्मध्यान्नेच्छन्ति समासाल्पबहुत्वतः (?)।
भावाभाववदप्येते मन्यन्ते वृत्तियोगिनि॥

गुणोत्कर्षातिरेकेऽपि किमन्यत्संभवेदिति ।
रीतिमेकामपीच्छन्ति न चान्ये भामहादयः ॥'

कवयस्तु पुनरेनामत्यन्तं श्रद्दधते । तथा च वैदर्भीमुद्दिश्य वामनस्य काव्यालङ्कारे—

'सति वक्तरि सत्यर्थे सति शब्दानुशासने ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥'

अन्यत्रापि—

'किं त्वस्ति काचिदपरैव पदानुपूर्वी
यस्यां न किंचिदपि किंचिदिवावभाति ।
आनन्दयत्यथ च कर्णपथं प्रयाता
चेतः सतामममृतवृष्टिरिव प्रविष्टा ॥
वचसि यमधिगम्य स्पन्दते वाचकश्री-
र्वितथमपि तथात्वं यत्र वस्तु प्रयाति ।
उदयति हि स तादृक् क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः ॥'

आवन्ती–लाट–मागध्यादयस्त्वेतच्छायानुपातिन्य एवेति न ताः पृथगुद्दिष्टाः ।

अलङ्कारोऽपि शब्दार्थशरीरोत्कर्षद्वारेण रसोत्कर्षाधायकः । परमसौ न गुणवदन्तरङ्गो नियतरसवृत्तिश्चेति ततोऽत्यन्तं भिद्यते । किन्तु तत्स्वरूपप्रतिष्ठाने संभवति शब्दार्थभित्तिकया बाह्यवृत्त्या कदाचिदेवानुप्रासादिभिः शब्दालङ्कारैरुपमादिभिरर्थालङ्कारैश्चोपकारकः । तदसंभवे तु, एतेऽलङ्काराः केवलमुक्तिवैचित्र्यमात्रविश्रान्ताः । तथा च यत्राङ्गिनो रसस्यानुपस्थानं तत्रोपमादिशब्दप्रयोगो गौणः । एतच्च लोकव्यवहारानुरूपम्—तत्र तावत्कामिन्याः सति सौन्दर्ये हारादयस्तदङ्गेषूत्कर्षं घटयन्ति । तद्राहित्ये कुरूपया परिधीयमानास्तु प्रेक्षकस्य दर्शनवैचित्र्यमात्रभाजो भवन्ति । क्वचित्त्वमी सतोऽपि रसस्य नोपकर्तारः । लोकेऽप्यतितरां सुकुमारया वध्वा अलङ्काराश्चेत्परिधीयेरन् तर्हि केवलं ग्राम्यत्वमुपयान्तो वैचित्र्यनिदर्शनात्मनैव परिणमन्ति । औद्भटास्तु—गुणालङ्काराणां साम्यत्वमृच्छत इति सर्वस्वप्रारम्भे ग्रन्थकृताऽपि निर्दिष्टमेव । एषां प्रकारान्तराश्रयणेन सिद्धान्तोट्टङ्कने त्वियं वाचोयुक्तिः—लौकिको गुणालङ्कारवर्गः

शौर्यादि–हारादिश्च यथाक्रमं समवेत–संयोग–सम्बन्धितया भिन्नश्चेदवगम्येत, तर्हि न काप्यनुपपत्तिः । परं काव्यान्वयिनो अलौकिका माधुर्यानुप्रासोपमादयो गुणालङ्कारा एकेनैव समवाय[1]सम्बन्धेनावतिष्ठन्त इत्यवश्याभ्युपेयम् । यतोऽमी शब्दार्थाभ्यां संश्लिष्टा एव दृश्यन्ते न तु विश्लिष्टा इत्येवमत्र लोकव्यवहारं दृष्टान्तीकृत्य संयोगसम्बन्धाख्यानेन वैषम्यारोपणं न न्याय्यम् । तथा च प्राचां गड्डलिका–प्रवाहसदृशमेवैषां भेदाभिधानव्यापार इति वदन्ति । इदं च प्रकाशकृता निरस्तमेव । वामनेन तु—काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्कारा इति सूत्रयता केवलं गुणा एव काव्यव्यवहारप्रवर्तकाः, नालङ्काराः, सन्तश्चैते गुणाहितशोभातिशयहेतव एव भवन्तीत्युक्तम् । यद्यपीदमपि तत्रैव सहेतुकं प्रत्युक्तम् । तथाप्युपचारेण निर्वाह्यम् । नाट्यशास्त्रे—

'उपमा दीपकं चैव रूपकं यमकं तथा ।
काव्यस्यैते ह्यलङ्काराश्चत्वारः परिकीर्तिताः ॥'

(नाट्यशा. अ. १६, श्लो. ४१)

इतीयन्तोऽलङ्काराः । भामहालंकारे तु संभूय संख्यानेन त्रिचत्वारिंशदलङ्काराः । एत एव दण्डिनापि सलक्ष्यलक्षणं मांसलीकृत्य व्युत्पादिताः । औद्भटीये त्वन्या अपि षडलङ्कृतयः कल्प्यन्ते । इतरत्तु समानमेव । रुद्रटेन तु मूलालङ्कारान् यथायथं संगृह्णतापि अवान्तरभेदाः सञ्चार्यन्ते । मम्मटेन तु काव्यप्रदीपसंकलिता एकषष्टिरलङ्काराणां संस्थाप्यते । अलङ्कारसर्वस्वेप्येतदासन्नैवालङ्कारस्थितिः । केवलं रसवदाद्यलंकारा अधिकं सन्निवेशिताः । एवमिह यथोत्तरमलङ्कारा वृद्धिं गमिताः । तेनैवं प्रतिभाति—यदत्र गुणरीतिवत्संकोचाय प्राच्यैर्दृक्पात एव न कृतः । एतदुत्तरं तु लाघवमलक्षयता कुवलयानन्दकारेण इतोऽप्यधिकाः संख्यायोपचयं प्रापिताः । किमियता । उपमा तावदनेकप्रकारवैचित्र्येणानेकालङ्कारबीजभूता, सा चैकाप्यात्मानं प्रपञ्चयन्ती बहुव्याकुलीकरोतीति नातिच्छन्नम् । अत्रेऽयमप्पय्यदीक्षितस्य चित्रमीमांसोक्तिः—

---

१ नात्र वैशेषिकसंमतः समवायोऽभिप्रेतः । किन्तु नित्यसम्बन्धोपलक्षकं सम्बन्धान्तरमेव ।

'उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥'

एवं सत्यपि व्याकरणैकव्युत्पत्तिमात्रफलकेष्वनुपयुक्तेष्वपि तद्भेदाख्यानेषु महान् संरम्भः । अलंकारसर्वस्वकारस्तु अत्रानुपयुक्तान् भेदसन्ततीन् न विस्तारयामासेति विलोकयतां स्पष्टमेव । अत्रैतदप्यनुषङ्गायातम्—यथा कविकर्मणो घटकतया गुणरीत्यलङ्काराणां समस्तो व्यस्तो वान्तःपातस्तद्विदां लक्ष्यभूत एवं तद्विघटकतया दोषसन्निधिर्न सह्यते । यद्यप्येकान्ततोऽत्र दोषमुक्तिर्दुरुपपादैवाथापि काव्यत्वोपमर्दकदोषसंक्रमो यथा न भवेत्तथावश्यं सावहितेन यतितव्यमित्येव स्थूलत आचार्याणां व्यवस्थापनम्–इतरथोत्कर्षकाणां सन्निपातेऽपि काव्यत्वव्याघातः । परमयमपि क्वचिदुपकारपक्षे गणनार्हः । तत एव प्राञ्चः पठन्ति—

'दोषश्च सकलोप्येष कदाचित्कविकौशलात् ।
व्युत्क्रम्य दोषगणनां गुणवीथिं विगाहते ॥'

क्वचित्तु पुनरेष न साधको, नापि बाधकः किंतूभयथा निष्क्रिय एव तिष्ठति यद्यपि दोषो निर्लक्षण एव, आनन्त्यात्तथापि तदनुगमो व्यवहारार्थमवश्यं वाच्यतामर्हतीति सोऽपि लक्ष्यते । अत एव चैते तत्र तत्र संभवाभिप्रायेणैव संख्यायन्ते । अलमियता प्रसङ्गागतविचारेण । सांप्रतमलङ्कारसर्वस्वतत्कर्तृविषय उपन्यस्यते—

अलङ्कारसर्वस्वाख्योऽयं प्राचीनेष्वलङ्कारसंदर्भेष्वन्यतमः सूत्रवृत्तिरूपः प्रौढो निबन्धः । इह सर्वेऽप्यलङ्काराः समासतो व्यासतश्च मीमांसिताः । सोऽयं संदर्भो वस्तुत आत्मनोऽलङ्कारसर्वस्वतामुच्चैःप्रमाणयन्नर्थालङ्कारविचारणासु काव्यप्रकाशमप्यतिशेते । बहुत्र तत्पथप्रदर्शकोऽप्यभूदिति तत्तत्प्रसङ्गालोचनेन व्यक्तमवसीयते । अत्र हि पूर्ववर्तिनामालङ्कारिकाणां काव्यस्थानलङ्कारादीनुद्दिश्य किंविधो विमर्श इति संक्षिप्य प्रदर्शनार्थमादावुपोद्घातप्रकरणं संदृब्धम् । तत्र 'इह हि भामहोद्भट प्रभृतयः....' इत्याद्युत्थाप्य 'अलङ्कारा एव काव्ये प्रधानम्' इति प्राचां मतमाविष्कृतम् । ततश्च रुद्रट–वामन–कुन्तकानां मतमालोचितम् । पर्यन्ते च युक्त्यनुगतैः प्रमाणपरिचयैः काव्यपुरुषावतारस्य ध्वनिकारस्य 'व्यङ्ग्य एव काव्यजीवित'मिति सिद्धान्तं संवादयन् स्वयमपि तदुक्तिषूपारुढगौरवस्तन्मतमेव सिद्धान्तितवान् । महिमभट्टस्तु पार्थक्येनालो-

चितः । एवं ध्वनिं संस्थाप्य तद्भेदानीषदुन्मील्य चित्रकाव्यभेदो दर्शितः । पुनश्च पुनरुक्तवदाभासादीनां पञ्चानां कक्ष्याविभागार्थं पौनरुक्त्यविधाः संख्याताः ।

कतिपयेष्वलङ्कारेष्वालङ्कारिकाणां शब्दार्थभेदमूलको मतभेद इति तत्र तत्र स्फुटमेव तथापि सर्वस्वकर्तुर्विषयनिरूपणशैलीपरिचयार्थं दिङ्मात्रमुच्यते— अयं बहुत्रालङ्कारविचारेषु युक्तायुक्तं परीक्ष्यापि प्राचामनुरोधेनैव सिद्धान्तयति । यथा पुनरुक्तवदाभासंशब्दार्थालङ्कारत्वेन सत्यापितमपि शब्दालङ्कारेष्वेव परिणामयति । बहुत्र पुना स्वपितुरेव मतं स्वीचकारेति च जयरथो वदति ( दृश्यतां विमर्शिनी पृ. १५८ ) ।

अस्य प्रणेता उद्भटविवेकाख्यग्रन्थकर्तृराजानकतिलकसूनू रुचकापरनामा रुय्यकाचार्यः खिस्ताब्दस्य द्वादशशतकपूर्वभाग आसीत् । एतन्निर्मिता ग्रन्थास्त्वेते—( १ ) अलङ्कारसर्वस्वम् ( २ ) अलङ्कारानुसारिणी ( ३ ) साहित्यमीमांसा ( ४ ) नाटकमीमांसा ( ५ ) हर्षचरितवार्तिकम् ( ६ ) व्यक्तिविवेकव्याख्यानम् ( ७ ) सहृदयलीला ( ८ ) श्रीकण्ठस्तवश्चेति । एषु अलङ्कारानुसारिणी काश्मीरकजल्हणकवेः सोमपालविलासकाव्यस्य टीका । अस्य निर्देशो विमर्शिन्यां जयरथेन रूपकालङ्कारे उत्प्रेक्षायां च कृतः ( दृश्यतां पृ. ४४, ७१ ) साहित्यमीमांसाप्येतत्कृतैवेति स्वयमत्रोत्प्रेक्षाविचारे निर्दिशति ( पृ. ७७ ) जयरथश्च विभावनानिरूपणे तामिमामस्मार्षीत् ( पृ. १६० ) व्यक्तिविवेकव्याख्यानेऽपीयं ग्रन्थकृता स्मर्यते ( त्रिवेन्द्रम–संस्करणं पृ. ३२ ) एवमुक्तस्थलेषु नाटकमीमांसा–हर्षचरितवार्तिकमिति द्वितयं चापि । अनयोरुपलब्धिर्नाद्यापि श्रूयते । श्रीकण्ठस्तवोऽपि नोपलभ्यते । सहृदयलीला तु काव्यमालायां गुम्फितैव ।

अथ साहित्यमीमांसायाः स्वरूपज्ञप्त्यै किञ्चिदुच्यते—इयं भामह–दण्डि–वामनोद्भटप्रभृति–प्राचोऽलङ्कारप्रबन्धोपजीव्या प्रायेण तन्नयानुवर्तिनी चास्ते । किंच तत्तदलङ्कारवचनानि क्वचित्साक्षादुद्धरन्ती, क्वचिच्च तात्पर्यमनुरुध्य प्रसरन्ती तदुक्तिभिश्च स्वोक्तिं प्रमाणयन्ती दृश्यते । तदेवंभङ्ग्या प्रमेयान् संचिन्वती बाढं भावुकानुपरञ्जयति । अथमत्र मङ्गलोपहारः—

---

१ अनन्तशयनग्रन्थावलौ मुद्रिता ।

'निदानं जगतां वन्दे वस्तुनी वाच्यवाचके ।
ययोः साहित्यवैचित्र्यात्सतां रसविभूतयः ॥'

एवमेषा रस–दोष–गुण–रीत्यलङ्कारादिसाहितीशासनोपयोगिविषयान्विवृण्वती प्रकरणाष्टकमयी तुरीयां तात्पर्याख्यां वृत्तिमाधाय रसास्वादनप्रवणा च। अत्र ग्रन्थकृद्वृत्त्यलङ्कारस्वरूपप्रस्तावे यथारुचितमौद्भटीयं काव्यालङ्कारसंग्रहं, गुणविवेचने च वामनीयं तृतीयमधिकरणं विशेषतो गृहीतवान्। एवं काव्यादर्शीयाः प्रथमपरिच्छेदोक्तयोऽप्युदाहृताः। अत्रत्यो मूलग्रन्थो बहुत्र प्रक्षेपविपर्यस्तः प्रतीयते। तत्र 'केचिदन्तर्भवन्त्येषु' इति 'शक्तिर्निपुणता' इति चोपलभ्यमाना काव्यप्रकाशकारिकाद्वयी तदुपपत्तौ मानम्। अस्याः के. श्रीसाम्बशिवशास्त्रिमहाशयानुमितं मङ्खकर्तृकत्वं तु न समीचीनमित्यत्रत्यलेखपर्यालोचनया, चतुरस्रमेव। यच्च भूमिकायां शास्त्रिभिः—'इह च साहित्यमीमांसायां बहुत्र–आचार्यपदेन पूजया गृह्यमाणोऽयं प्रामाणिकः स एव गुरुः श्री रुय्यकः संभवी।' इत्युक्तं तत्सर्वथा भ्रान्तिविलसितम्। नह्यत्राचार्यपदेन कश्चिद् व्यक्तिविशेषो विवक्षितः। अपि तु भट्टोद्भटवामन–प्रतीहारेन्दुराजादीन् गौरवानुरूपमाचार्यपदेन विशिनष्टीति मूलग्रन्थ एव विस्पष्टम्। एवमेतत्कर्तुर्जीवितसमयाकलने मम्मटस्यैकादशशतकस्थितिरपि शास्त्रिसंमता प्रमाणदुर्बलत्वान्नाभिमता भवितुमर्हतीति रुय्यक–मङ्खयोरस्मदुपदर्शितरीत्या समयोऽवसेयः। एवं व्यक्तिविवेकव्याख्यानमपि रुय्यककृतमेवेति जयरथोक्त्या ज्ञायते। (विमर्शिनी पृ. १६)।

अद्यावधि ससूत्रस्यालङ्कारसर्वस्वस्य कर्तृकतया रुय्यक एव सर्वसंमत आसीत्। परं काव्यमालायामस्य गुम्फनोत्तरमनन्तशयनसंस्कृतग्रन्थावलौ मुद्रितस्य भूमिकायां स्वर्यातमहामहोपाध्याय श्रीगणपतिशास्त्रिमहोदयः सूत्रकारो रुय्यको वृत्तिकारश्च तच्छिष्यो मङ्ख इति निश्चिन्वान उभयोर्भिन्नकर्तृकत्वममन्यत। तच्चैवम्—अनेन केरलाक्षरलिखितं चतुःशतवर्षवृद्धदेश्यं पुस्तकत्रयं लब्धम्। तत्र प्रारम्भे 'गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते' इति गुरुशब्दोपादानात्तदनुमेयो वृत्तिकारस्य गुरुः सूत्रकार इति निर्द्धारितम्। तथा तत्रैव समाप्तौ—'इति मङ्खुको वितेने काश्मीरक्षितिपसांधिविग्रहिकः। सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥' इत्यनेन ग्रन्थकृदात्मनः कर्तृत्वं

वदन् नामापि निर्दिष्टवान्। तद्देशीयस्य समुद्रबन्धस्य च कृतं व्याख्यानमपि कश्चिल्लब्धमेतेन सह संश्लेषितमास्ते। अयमपि तथा व्याचक्षाणो मङ्खमेव वृत्तिकर्तृकत्वेन निर्दिशतिस्म। शास्त्रिणा चैकान्ततोऽत्र समुद्रबन्धस्यैव प्रामाण्यं स्वीकृतम्। एतट्टीकने च कथमयं प्रावर्तदित्यादिवृत्तमुक्तग्रन्थावलौ प्रकाशितस्य प्रद्युम्नाभ्युदयस्य भूमिकायामुपन्यसता मङ्खोपर्येव सर्वस्वस्य कर्तृत्वभारः प्रक्षिप्तः। तथा च तदुपयुक्तांशोऽप्यत्रानूद्यते—चन्द्रवंशशाखाभूते यदुवंशे साहित्यसङ्गीतकलाकुशलो जयसिंहसुतः संग्रामधीरापरनामकः कश्चित् रविवर्मा कोलम्बाधिपतिरासीत्[1]। अस्याश्रितया पण्डितपरिषदा सर्वस्वस्य दुरूहतां दृष्ट्वा तद्व्याख्यानायायं प्रार्थितोऽभूत्। ततश्चानेन ग्रन्थप्रमेयं स्वयंविवृण्वताऽपि लेखकर्मणि समुद्रबन्धो नियुक्त इति स्वीयटीकाप्रारम्भे—

'..........................................

अवधृत्यै यदुपतिना विवृतस्य गरीयसस्तदर्थस्य।
कश्चिद् व्यधितविपश्चिच्छब्दनिबन्धं समुद्रबन्धाख्यः॥'

इति व्यलिखत्। काव्यमालादर्शभूते 'क' 'ख' संज्ञया व्यवहृते तु 'निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते' इति पाठोपलब्ध्या बहुविचार्य मयापि स एवात्र संस्करणे स्वीकृतः। भवतु नाम। शास्त्रिभिर्यदुक्तं तदखिलमुपपत्तिमदथापि न स्वीकारार्हम्। केरलादर्शेषु तथा पाठेऽपि गुरुशब्दस्यालङ्कारशब्दसान्निध्यात् स्वारस्याच्च विशेषणतयैव योगो युक्त आसीत्। सच अन्यथोत्प्रेक्षणयैव विरोधप्रतिक्षेपकोऽभूदिति द्रष्टव्यम्। रुय्यकस्य च सूत्रप्रणयनं सर्वसंमतं, मङ्खश्च तच्छिष्य इत्यपि तदुक्त्यैव सिद्धम्। तथा च श्रीकण्ठचरिते—

'व्याख्यासु यस्य वदनं रदनांशुभिरीक्ष्यते।
आकर्षदिव वाग्देव्या धौतक्षौमपटाञ्चलम्॥
अर्पयन् कमपि स्पन्दं धाम्नः सारस्वतस्य भूः।
य एव सर्वशास्त्राणां साकारमिव जीवितम्॥
विवृतीर्यो लिखत्यात्तलेखन्येकाङ्गुलीतलः।
ग्रन्थेभ्योऽर्थस्य विश्रान्त्यै सूत्रिकामर्पयन्निव॥

---

१ अयं वञ्चिमण्डलमहाराजस्य पूर्वजः, प्रद्युम्नाभ्युदयस्य च प्रणेता।

यत्कृतिष्ववधानेन मूर्धा कस्य न वीप्सया ।
सारस्वतरसावर्तवलनेनेव चेष्टते ॥
तं श्रीरुय्यकमालोक्य स प्रियं गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतःसंभेदमज्जनम् ॥

(कुलकम् २५ सर्गः ।)

परं यत्प्रामाण्येनैतदुक्तं स एव ग्रन्थप्रणेतृविषये भ्रान्तः । यतोऽयं मङ्खं काश्मीरभूपतेः सांधिविग्रहिकपदे प्रतिष्ठितं मनुते । एतच्चेतिहासविरुद्धं किन्त्वस्य ज्यायान् लङ्ककस्तत्पदमविन्दत इति मङ्खसमये सप्रमाणं प्रदर्शितमेव । अपि च, समुद्रबन्धो मम्मटं रुय्यकात्पूर्वतनं विश्वसिति परं तदपि मम्मटप्रस्तावे निरस्तम् । किंच जयरथव्याख्यामजानन्नेवायं निजटीकाकरणे प्रवृत्त इति दृढं प्रतिभाति । यतोऽयं क्वापि तथाविधं विद्यावयो वृद्धं न सस्मार । टीका चास्य केवलं सूत्रोदाहरणैकयोजनप्रवणा क्षुद्रकाया च । तस्माच्चतुरस्रपरीक्षया इत्थमत्र पर्यवस्यति यद्रुय्यक–मङ्खयोर्गुरुशिष्यभावादेककालिकत्वादेकदेशीयत्वाच्च लेखकादिप्रमादात् काश्मीराद्बहुविप्रकृष्टैः केरलीयैः रुय्यकस्थाने मङ्खकोऽवधारित इति युक्तिसबलम् । एवं पूर्वोक्तगुरुवर्णनपद्यैरपि रुय्यकस्य बहुग्रन्थकर्तृकता सिद्ध्यत्येव । अन्यथा यावदुपलब्धग्रन्थानां मङ्खकर्तृकत्वेनैव विज्ञापनायां तदीयं गुरुवर्णनं कथं संवदेदिति विमर्शकैः समनोनियोगं विभावनीयम् । एतदेव डाक्तर बूलर महोदयोऽपि संमनुते (See Dr. Buhler's Kashmir Report P. 66-68)

काव्यमालासंपादकत्वेन सुगृहीतनामधेयैरस्मत्पूज्यतमैर्महामहोपाध्याय श्रीदुर्गाप्रसादमहानुभावैः काव्यमालागुम्फितायां सहृदयलीलाभूमिकायां यन्निर्णीतं तदप्यत्रानुग्राहकम् ।

## मङ्खः ।

कविरयं सुस्सलसूनोः काश्मीरकजयसिंहमहीपतेः शासनसमये प्रतिष्ठते । जयसिंहो हि ११२७ खिस्ताब्दादारभ्य ११४९ मितवत्सरान्तं यावन्महीं प्रशशास । तेनास्यापि स एव कालो निश्चितः । दीपशिखा कालिदास–छत्रभारवि–तालरत्नाकर इत्येवमादितत्तत्कल्पनामूलकमतिशयपरिचायकं महाकवीनां ना-

मान्तरवदस्यापि 'कर्णिकारमङ्ख' इति नामान्तरं प्रसिद्धिं प्रापदित्यस्य श्रीकण्ठचरितकाव्यस्य व्याख्यात्रा द्वितीयराजतरङ्गिणीकारेण राजानकजोनराजेन (१४१७–१४६७ ख्रि.)—

'विवृण्वता सौरभरोरदोषं
बन्दिव्रतं वर्णगुणैः स्पृशन्त्या ।
विकस्वरे कस्य न कर्णिकारे
घ्राणेन दृष्टेर्ववृधे विकारः ॥' (श्रीकण्ठच. ६।१३)

इति श्लोकव्याख्याने स्पष्टीकृतम् । अस्य ज्यायान् सहोदरोऽलङ्कारापरनामा लङ्ककश्च जयसिंहराज्ञः सामन्तो विख्यातगुणगौरवश्चासीदित्यस्यैव काव्यस्य पञ्चविंशसर्गादवगम्यते । तथाहि—

'यः सामन्तशिखामणेऽत्र भवतालङ्कारनित्यं सता-
मानीतोऽनवकाशतां हृदि हृताशेषाद्भुतापद्धिथि ।
तेषां श्रोत्रविलिह्यमानगहनत्वत्सूक्तिचर्वोत्सवै
राशीभूत इवाधिशीर्षमधुना कम्पः स संपद्यते ॥
एकं श्रीजयसिंहपार्थिवपतिं काश्मीरमीनध्वजं
तस्योपासितसन्धिविग्रहमलङ्कारं द्वितीयं स्तुमः ।
भूभारः प्रथमेन पन्नगपतेः क्ष्मां रक्षता वारितो
नीतोऽन्येन कृतार्थतां प्रवचनैर्भाष्योपदेशश्रमः ॥' इति.

(श्रीकण्ठच. २५।४०, ६१)

अत्र प्रथमः श्लोको लोष्टकस्येति जोनराजः । आरोहक–भगदत्तस्य सूक्तिमुक्तावलीसंग्रहे श्लोकान्तरमपि लोष्टकस्य लभ्यते । तेन स एवायं भवेत् । द्वितीयस्तु भागवताचार्यदेवधरस्य । लङ्ककस्यालङ्कारेति नाम राजतरङ्गिण्यामपि दृश्यते । तथाहि—

'अलङ्काराभिधो बाह्यराजस्थानाधिकारभाक् ।
अधृष्यो मानुषैर्युद्धे विरुद्धान् बहुधावधीत् ॥'

(राजत. ८।२६, ५८)

इयता मङ्खवृत्तमनायासेन बोद्धुं शक्यम् । अस्य श्रीकण्ठचरितमनेकार्थकोशश्चेति कृतिद्वयमेवाद्यावधि ज्ञातम् ॥

अथात्र सर्वस्वे स्मृतानां केषांचनालङ्कारनिबन्धकाराणां प्रसङ्गतः समयः प्रस्तूयते—

## भट्टनायकः ।

अयमानन्दवर्धनाचार्या (८५५–८८४ खि.) दुत्तरत्रैरस्मिन् लोचनकारादाचार्याभिनवगुप्तपादात् (९९३–१०१५ खि.) पूर्वस्मिन्नासीदिति तत्तन्निबन्धनिर्देशतो ज्ञायते। सोऽयं प्राचामलङ्कारगोष्ठीषु लब्धप्रसरो हृदयदर्पणाख्यं ग्रन्थं निर्मितवान्। तच्च ध्वनिप्रतिभटभूतमिति प्रामाणिकाः। यतोऽस्य मतखण्डना ध्वन्यालोकलोचने 'एवं यद्भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैवे'त्यादिना क्रियमाणा जागर्त्येव। काव्यप्रकाशस्य चतुर्थोल्लासे मम्मटाचार्यैरपि रसस्वरूपं परामृशता सम्यगयमालोच्य प्रत्युक्तः। एवं व्यक्तिविवेककारोऽप्येनं संस्मरन्—

'सहसा यशोऽभिसर्तुं समुद्यताद्दृष्टदर्पणा मम धीः।
स्वालङ्कारविकल्पप्रकल्पने वेत्तिकथमिवावद्यम्॥'

इत्यभिधत्तेस्म। एतेनास्यग्रन्थो ध्वनिविरोधपर एवासीदिति प्रतिभाति। केचित्तु भरतमुनेर्नाट्यशास्त्रस्य व्याख्यानं दर्पणमिति वदन्ति। तत्तु तथाविधपुस्तिकाबन्धलाभाभावे कथमिव विश्वसनीयं स्यात्। ध्वनिदूषणं तु तत्रापि संभवन्निर्बाधमेव। किंचानेनैव महामनस्विना प्रथमं ध्वनिनिराकरणाय बीजवापः कृतः। तदुत्तरमेव महिमाचार्यैर्ध्वनिकारोक्तिषु पराक्रान्तमिति सुधीभिर्विभावनीयम्।

## आचार्यकुन्तकः।

राजानकसंज्ञकब्राह्मणकुलोत्पन्नः काश्मीरेषु जनिं लेभे। अस्य स्थितिसमयस्त्वीशवीयाब्दस्य दशमैकादशशतकयोरन्तरालः। अयं स्वोपज्ञवृत्तिसहितं वक्रोक्तिजीवितनामानमलङ्कारप्रबन्धं निबबन्ध[1]। तत्र च लोकोत्तरप्रतिभेनानेन—

'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥'

इत्यादिना काव्यजीवितालम्बना स्वतन्त्रा वक्रोक्तिः प्रतिष्ठापिता। एषाऽपि महिमभट्टेन ध्वनिवदनुमानेऽन्तर्भाविता। अत्र बहूनां काव्य–नाटकालङ्कारकर्तॄणां श्लोका लभ्यन्ते। परं तेषां नामकृतिपरिचयो दुःसाध्य एव। नाम-

१ अयं ग्रन्थः ढाकाविश्वविद्यालयाध्यापकैः डाक्तरश्रीसुशीलकुमारदेमहोदयैर्विशदयाङ्ग्लभाषाभूमिकया अन्यैश्चोपस्करैः संयोज्य संशोध्य च मुद्रापित इति तेभ्यः सबहुमानं साधुवादा उपह्रियन्ते।

ग्राह्यं तु—कालिदासादयस्तथा आनन्दवर्धन–भामह–रुद्रट–राजशेखरादयो लक्ष्यभूता एव स्मर्यन्ते । अस्मिन् प्रबन्धे चत्वार उन्मेषाः, तेषु प्रथम–द्वितीयौ मुद्रितौ, शिष्टयोर्द्वयोश्च मुद्रणार्थं मद्रासनगरपरिसरवर्ती कश्चन पण्डितो यतत इत्यनुश्रूयते । अस्यैव 'संरम्भः करिकीटमेघ–' इति पद्यं विधेयाविमर्शदुष्टतया व्यक्तिविवेककारेण महत्या आरभट्या दूषितम् ।

## महिमभट्टः ।

अयं श्यामलशिष्यः श्रीधरसूनू राजानकमहिमाचार्यो लोचनकारात् किंचिदेवोत्तरस्मिन् ख्रिस्ताब्दस्य दशमशतके कश्मीरेषु बभूव । ख्रिस्तैकादशशतकस्थितेन व्यासदासापरनामकेन श्रीक्षेमेन्द्राचार्येणौचित्यविचारचर्चायां[1] 'न तु यथा श्यामलस्य' सुवृत्ततिलके[2] च 'विपरीता यथा भट्टश्यामलस्य' 'यथा भट्टश्यामलस्य' इत्येवमादिना स्मर्यमाणः स एवायं श्यामलोऽस्य गुरुपदवीमारूढ इति तर्कयामः । एतदप्यस्य दशमशतकस्थितिं लक्षयति । M. T. नरसिंह अय्याङ्गार पण्डितोऽपि स्वीये व्यक्तिविवेकप्रस्तावे[3] प्रकृतमेव प्रमाणयति—

'We know that Anandavardhan lived in the later half of the 9th century at the time of Avantivarman (855-884 A. D.) Bhaṭṭa Nayak was a contemporary of Shankar Varman (884-902 A. D.) and Abhinavagupta Padacharya of Lochankar flourished about 993-1015 A. D. ( See Duff's Chronology of India P. 102 ) Thus we may safely conclude that Mahim Bhaṭṭa cannot be earliar than 1000 A. D."

अयं महिमा ध्वनिनिरासाय विमर्शत्रयात्मकं व्यक्तिविवेकाख्यं ध्वनिग्रन्थं निरमात् । अस्मिन् सर्वोऽपि ध्वनिप्रपञ्चो महताभिनिवेशेनानुमानशरीरेऽन्तर्भावितः । अनुमानाद् व्यङ्ग्यप्रतीतिं निरूपयतोऽस्यैव मतं मम्मटेन नामानिर्देशेन पञ्चमोल्लासे दूषितम् । हेमचन्द्रोऽप्यात्मनः काव्यानुशासने व्यक्तिविवेकमुद्धरन्नामनिर्देशं न कृतवान् । व्यक्तिविवेकस्य व्याख्याता च रुय्यक एवेति

---

१ काव्यमालामुद्रितायां पृ. १२५ द्रष्टव्यम् ।

२ काव्यमालामुद्रिते पृ. २, ४४, ५५ द्रष्टव्यम् ।

३ See the Journal of the Rayal Asiatic Society, January 1908.

दर्शितमेव। किंच 'तत्त्वोक्तिकोशः' कोऽपि महिमकृत इति व्यक्तिविवेकाज्ज्ञायते—

'इत्यादि प्रतिभातत्वमस्माभिरुपपादितम्।
शास्त्रे तत्त्वोक्तिकोशाख्य इति नेह प्रपञ्चितम्॥'
(व्यक्तिवि. २ विमर्शः)

## मम्मटः।

इह काव्यप्रकाशकर्तुर्मम्मटाचार्यस्य क्रियमाणा स्थितिकालकलना तावदापाततश्चर्वितचर्वणेव प्रतीयते। परमद्यावधि निर्णीतः स्थितिकालः पूर्वापरप्रेक्षिकया बहु विरुध्यत इत्यस्माकं रुय्यकसमयनिर्णये विरोधापातादुपनतमिति सामञ्जस्यमास्थातुमावश्यकीयं विचारणा। काव्यप्रकाशस्य निर्माणकालोऽनुमानमन्तरा निर्णेतुमशक्य एव। दृढतरप्रमाणानुपलम्भात्। एवमिह विसंवादाधेः संक्रमणं न खल्वाश्चर्यावहम्। तथाचात्र विरोधपरिहारायायमुपक्रमः—सरस्वतीकण्ठाभरणादिविविधग्रन्थरचयितुर्भोजदेवस्य जीवितकाल (९९६–१०५१ खि.) स्तद्दानपत्रतो व्यक्तः। मम्मटश्च 'भोजनृपतेस्तत्त्यागलीलायितम्।' इति पद्यमुदात्तालङ्कार उदाहृतवानिति तत्समयमनुरुध्य मम्मटस्य सत्ता साधनं कैश्चित्—क्रियते। तद् हेत्वाभासमात्रत्वान्न प्रमाणक्षमम्। ततो ज्येष्ठेऽलङ्कारसर्वस्वेऽपि तदुपलम्भात्। एवं प्रकाशटीकासु प्रथमत्वेन संभाविता जैनमाणिक्यचन्द्रस्य 'सङ्केत'नाम्नी टीका १२१६ विक्रमाब्दे निर्मितेति तदन्ते—

'रसवक्त्रग्रहाधीश(१२१६)वत्सरे मासि माधवे।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः॥'

इति स्वोक्त्या समर्थनात्प्रमाणान्तरनिरपेक्षम्। तथाचानयोरन्तःपातिना मम्मटेनैकादशशतके काव्यप्रकाशो निरमायित्यनुमानमपि न निर्बाधम्। वस्तुतस्तु द्वादशशतकस्य पूर्वार्धान्ते तन्निर्माणमभूदिति सयुक्तिकः पन्थाः। रुय्यको हि खिस्ताब्दस्य द्वादशशताब्द्याः पूर्वभागवर्तीति समनन्तरमेवोक्तम्। अनेन च संकरालङ्कारं विचारयता—

'राजति तटीयमभिहत दानव–रासातिपति साराव नदा।
गजता च यूथमविरत–दानवरा सातिपाति सारा वनदा॥
(हरविजयं ५ सर्गः।)

इति रत्नाकरश्लोकस्थितः प्राचां शब्दालङ्कारसंकरो दूषितः। स च मम्मटेन दशमोल्लासे समर्थितः। अपि च रुय्यकेण यद्व्यतिरेकालङ्कारे—उपमानादुपमेयस्याधिक्यमित्यपरो लक्षणप्रकारो लक्षितः, सोऽपि 'क्षीणः क्षीणोऽपि शशी' इति तदीयोदाहरणमुपदर्श्य निराकृतः। अन्यच्च 'स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्' इत्यादिकारिकाव्याख्यानेऽलङ्कारानुद्दिश्य 'कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्येति चेत्'—इति पूर्वपक्षीकृत्य समाधेरुपक्रमे आनुषङ्गिकतया—'योऽलङ्कारो यदाश्रितः स तदलङ्कार'—इत्यादिना रुय्यक एव प्रत्युक्तः। एतेन नवमोल्लासे श्लेषभेदाख्यानावसरे—'ननु स्वरितादिगुणभेदात्' इत्यारभ्य 'कथमयं शब्दालङ्कारः' इत्यन्तः पूर्वपक्षग्रन्थोऽपि रुय्यकमतनिरासपरः संगच्छते। इत्थमन्यैरुपदर्शितः कालक्रमश्चेदास्थीयेत तर्हि कथमिव पूर्ववर्तिना परवर्तिनो मतमालोच्येत? कथं च तत् श्रद्धेयं स्यात्? अपरं च, प्रकाशटीकाकृद्भिस्तत्र तत्र प्रघट्टकेषु मूलग्रन्थयोजनायां नामग्राहं सर्वस्वकृतोक्तिर्विवृता। यत्तु जयरथेन **विमर्शिन्यां**—'अन्ये, केचित्' इत्यादिमूलप्रतीकमुपादाय बहुत्र 'काव्यप्रकाशकारः' 'काव्यप्रकाशकारादयः' इत्येवं विवृतं तत्तस्य समयानभिज्ञतया प्रामादिकमित्यवधेयम्। परमत्र दाक्षिणात्यस्य समुद्रबन्धस्यैवंविधो भ्रमावर्तपातः कथमिवोपेक्षणीयः प्रेक्षावताम्। इयता चालङ्कारसर्वस्वस्य मङ्खकर्तृकत्वं च संगमयन् कथमिवासौ नोपालभ्यः। कथं च तदुक्तिषु प्रत्ययोत्पत्तौ कश्चिदप्यात्मनि बहुमानः स्यादिति सुदूरेक्षिकया पर्यालोच्यम्।

## राजानक–जयरथः।

अयं राजराजनृपमन्त्रिप्रवरस्य शृङ्गारकवेः सूनुः हरचरितचिन्तामणेः कर्ता खिस्तवर्षस्य द्वादशशतकोत्तरार्धे कश्मीरेषु बभूव। अयमेवालङ्कारसर्वस्वस्य विमर्शिनीनाम व्याख्याकारः। इयं विमर्शिनी ग्रन्थगौरवानुरूपं विवेचयन्ती प्रमेयशय्योपकल्पनासु विदग्धा सर्वाङ्गसुभगेति च न मनागपि संशयः। व्युत्पित्सूनां प्रतिभावैशद्यार्थं पुनरतितरामुपकर्त्री। यत्र पुनः सर्वस्वे क्वाप्यलङ्कारभेदप्रपञ्चः संक्षेपितस्तत्रेयमुदाहरणान्तरैर्विषयजातं प्राञ्जलीकरोति। परं मूलोद्दिष्टासूदाहृतिषु प्रायेण मौनं भजन्ती प्रौढेतरानध्यापकान् विशेषतोऽध्येतॄंश्च क्लिश्नात्येव। यद्यप्यलङ्कारोदाहृतिषु योग्यतां वहन्त्यः काश्चन लक्ष्यव्यक्तयो नियताः, प्राचीनेषु नवीनेषु च साहितीसन्दर्भेषूदाह्रियमाणाः, क्वचन पाठान्त-

रश्लिष्टा अप्यर्थगत्या परस्परं संवदन्त्यस्तत्र तत्रोपलभ्यन्त एव । अथाप्यत्र तासामर्थाधिकानां विभिन्नस्थानवर्तितया बहुत्राननुगमापाताल्लक्षणसङ्गतिरायाससाध्या भवति । क्वचित्तु पुनर्बहुश्रुता अपि व्यामोहभाजो भवन्ति । अथापि सर्वभावेन गुणानां बहुलत्वे प्रसज्यमानोऽसौ दोषो न विचारसहः । अयमेवाचार्याभिनवगुप्तपादानां तन्त्रालोकमहार्णवस्य कर्णधारोऽपिजज्ञे ।

## समुद्रबन्धः ।

एष जयरथादर्वाचीनः कोलम्बाधीशस्य रविवर्मणः पण्डितसभाग्रणीः १२६५ तमे खिस्ताब्दे तदन्तिके व्यराजत् । राज्ञः प्रेरणया चालङ्कारसर्वस्वं व्याकरोत् । सा चास्य व्याख्या विशेषविचारविकला सङ्कुचिताङ्गा प्रायेण सूत्रोदाहरणे योजयन्ती न तथोपकारिणी यथा विमर्शिनी । मूलोदाहरणेषु यत्र यत्रावान्तरभेदाः सङ्केतिताः, तत्र सर्वत्रायं प्रायेण रविवर्मणः स्तुतिपराण्येव पद्यान्युदाजहार । तान्यस्यैवान्यस्य वेति को निर्णयेत् ।

अस्य प्रस्तुतं संस्करणं पुस्तकद्वयाधारेण संपादितम् । तत्रैकं १८९३ ईशवीयाब्दे काव्यमालायां प्रकाशितमपरं १९१५ ईशवीयाब्दे "अनन्तशयनं संस्कृतग्रन्थावलौ" मुद्रितम् । अनयोश्च तत्तत्स्थलीयान् पाठभेदान् सम्यक् पर्यालोच्यान्यतरो विन्यस्तः । उदाहरणश्लोकाश्च यत्रान्यथाकारा आसन्, तत्र तत्तद्ग्रन्थेभ्यः संवाद्य योजिताः । पर्यन्ते च श्लोकानुक्रमेण सह यावदुपलब्धानि कवीनां तद्ग्रन्थानाञ्च नामान्यपि–सन्निवेशितानि ।

इत्थमत्र प्रस्तावनासंपादने आयुष्मता **श्रीगङ्गाधरद्विवेदेन** पूर्वापरसाहित्यविषयान् मूलतः प्रमाणीकृत्यात्मनः साहित्यपरीक्षां ददता बहुभाषाविदामेकान्ततो निर्णीतविषयान्पर्यालोच्याङ्गीकुर्वता यन्मह्यमुपहृतं, तदस्य नव्यभावुकतां विमृश्यार्पितं समुदीयादिति निःश्रेयसकामस्तमाशीर्भिरभियोज्य विश्रम इति शिवम् ।

'सरस्वती-पीठम्'
जयपुरम्
३।१०।३८

श्रीगिरिजाप्रसादद्विवेदः ।

# अलंकारसर्वस्वस्य विषयानुक्रमणिका ।


| | | | |
|---|---|---|---|
| उपोद्घातः ... ... | १ | निदर्शना ... ... | ९७ |
| पौनरुक्त्यप्रकाराः ... ... | १९ | व्यतिरेकः ... ... | १०१ |
| अर्थपौनरुक्त्यम् ... ... | २० | सहोक्तिः ... ... | १०३ |
| पुनरुक्तवदाभासः ... ... | २० | विनोक्तिः ... ... | १०५ |
| छेकानुप्रासः ... ... | २४ | समासोक्तिः ... ... | १०७ |
| वृत्त्यनुप्रासः ... ... | २५ | परिकरः ... ... | १२० |
| यमकम् ... ... | २६ | श्लेषः ... ... | १२१ |
| शब्दार्थपौनरुक्त्यम्... ... | २७ | अप्रस्तुतप्रशंसा ... ... | १३२ |
| लाटानुप्रासः ... ... | २८ | अर्थान्तरन्यासः ... ... | १३९ |
| चित्रम् ... ... | ३० | पर्यायोक्तम् ... ... | १४१ |
| उपमा ... ... | ३१ | व्याजस्तुतिः ... ... | १४२ |
| अनन्वयः ... ... | ३७ | आक्षेपः ... ... | १४४ |
| उपमेयोपमा ... ... | ३९ | विरोधः ... ... | १५४ |
| स्मरणम् ... ... | ४० | विभावना ... ... | १५७ |
| रूपकम् ... ... | ४३ | विशेषोक्तिः ... ... | १६० |
| परिणामः ... ... | ५१ | अतिशयोक्तिः ... ... | १६३ |
| संदेहः ... ... | ५३ | असंगतिः ... ... | १६३ |
| भ्रान्तिमान् ... ... | ५५ | विषमम् ... ... | १६५ |
| उल्लेखः ... ... | ५८ | समम् ... ... | १६७ |
| अपह्नुतिः ... ... | ६३ | विचित्रम् ... ... | १६८ |
| उत्प्रेक्षा ... ... | ६९ | अधिकम् ... ... | १६९ |
| अतिशयोक्तिः ... ... | ८३ | अन्योन्यम् ... ... | १७० |
| तुल्ययोगिता ... ... | ८९ | विशेषः ... ... | १७१ |
| दीपकम् ... ... | ९१ | व्याघातः ... ... | १७३ |
| प्रतिवस्तूपमा ... ... | ९४ | कारणमाला ... ... | १७६ |
| दृष्टान्तः ... ... | ९६ | एकावली ... ... | १७७ |

मालादीपकम् ... ... १७८
उदारः (सारः) ... ... १७९
काव्यलिङ्गम् ... ... १८१
अनुमानम् ... ... १८४
यथासंख्यम् ... ... १८७
पर्यायः ... ... १८९
परिवृत्तिः ... ... १९१
परिसंख्या ... ... १९३
अर्थापत्तिः ... ... १९६
विकल्पः ... ... १९८
समुच्चयः ... ... २००
समाधिः ... ... २०५
प्रत्यनीकम् ... ... २०६
प्रतीपम् ... ... २०७
मीलितम् ... ... २१०
सामान्यम् ... ... २१२
तद्गुणः ... ... २१३
अतद्गुणः ... ... २१४
उत्तरम् ... ... २१६
सूक्ष्मम् ... ... २१७
व्याजोक्तिः ... ... २१८
वक्रोक्तिः ... ... २१९
स्वभावोक्तिः ... ... २२२
भाविकम् ... ... २२३
उदात्तम् ... ... २३०
रसवदाद्यलंकाराः ... ... २३२
भावोदयः ... ... २३८
भावसंधिः ... ... ,,
भावशबलता ... ... ,,
संसृष्टिः ... ... २४१
संकरः ... ... २४८

श्रीमद्राजानकरुय्यकप्रणीतम्

# अलंकारसर्वस्वम्।

श्रीमद्राजानकजयरथप्रणीतयालंकारविमर्शिणीसमाख्यया व्याख्यया समेतम्।

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम्।
निजालंकारसूत्राणां वृत्त्या तात्पर्यमुच्यते॥

मङ्गलकामनया ग्रन्थकृन्निजेष्टदेवताप्रणामपुरःसरमभिधेयं तात्पर्यं चैकेनैव वाक्येन परामृशति—**नमस्कृत्येति**। परां वाङ्मयाधिदेवतां पराख्यां शब्दब्रह्मणोऽपृथग्भूतां शक्तिं परां वाचं देवीं त्रिविधविग्रहां बहिरुल्लिलासयिषया पश्यन्तीमध्यमावैखरीरूपेण प्रकारत्रयेणाधिष्ठितशरीरां नमस्कृत्य निर्विघ्नचिकीर्षितग्रन्थसमाप्तये तां प्रति कायवाङ्मनोभिः प्रह्वीभूय निजालंकारसूत्राणां वृत्त्या तात्पर्यमुच्यत इति मङ्गलान्वययोजना। तथा चात्रोक्तलक्षणार्थविस्तरः—'येयं विमर्शरूपैव परमार्थचमत्कृतिः। सैव सारं पदार्थानां परा वागभिधीयते॥ नादाख्या सर्वभूतेषु जीवरूपेण संस्थिता। अनादिनिधना सैव सूक्ष्मा वागनपायिनी॥ अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ वैखरी शब्दनिष्पत्तिर्मध्यमा स्मृतिगोचरा। द्योतिकार्थस्य पश्यन्ती सूक्ष्मा ब्रह्मैव केवलम्॥' इत्यादिशास्त्रोक्तिक्रमेण सर्वत्र सदोदितायाः सूक्ष्मायाः परायाः शब्दब्रह्मणः शक्तेर्बहिरुन्मिषन्त्याः प्रथमो विवर्तः पश्यन्ती नाम। तथा चोक्तम्—'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा। स्वरूपज्योतिरेवान्तःसूक्ष्मा वागनपायिनी॥' इति। अस्यार्थः—अविभागा स्थानकरणप्रयत्नप्रकारेण वर्णानां विभागहीना अत एव संहृतक्रमा तथैवान्तःस्वरूपज्योतिः स्वयंप्रकाशा स्वस्यात्मनो रूपं ज्योतिश्च सर्वत्र हि सर्वविधायिनी शक्तिरेवेति वान्तःसूक्ष्मबीजादङ्कुरमिव बहिरुन्मिषन्ती किंचिदुच्छूना पराया मध्यमायाश्चावस्थां तटस्था पश्यतीति पश्यन्तीत्युच्यते। ततः परंतु—'अन्तःसंकल्परूपा या क्रमरूपानुपातिनी। प्राणवृत्तिमतिक्रम्य मध्यमा

वाक्प्रवर्तते ॥' एतत्कथयामीति विमर्शरूपा अन्तःसंकल्परूपा प्राणवृत्तिमतिक्रम्य श्रोत्रग्राह्यवर्णाभिव्यक्तिरहिता क्रमरूपानुपातिनी मानसिकवर्णोच्चारणक्रमेण द्वितीयो विवर्तो मध्यमारूपो जायते। मध्यमा किल द्वयोर्वाग्विवर्तयोः पश्यन्तीवैखरीसंज्ञयोर्मध्ये वर्तनान्मध्यमेत्युच्यते । तदनन्तरं च 'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥' इति लक्षणात्स्थानकरणप्रयत्नक्रमव्यज्यमानः श्रोत्रग्राह्यदुन्दुभिवीणादिनादपरिचयो गद्गदाव्यक्तगकारादिविलाससमुच्चयपदवाक्यात्मकतृतीयो विवर्तो वैखरीत्युच्यते । विशिष्टं खमाकाशं मुखरूपं राति गृह्णातीति विखरः प्राणवायुसंचारविशिष्टो वर्णोच्चारस्तेनाभिव्यक्ता वैखरीति । विखरे शरीरे भवा वैखरीति वा केचित् । सिद्धो मङ्गलार्थः । तथा चात्र पूर्वार्ध एव पुनरावृत्त्याभिधेयपदार्थान्वययोजना—यथा परां वाचमुत्तमकाव्यरूपतया काव्यात्मध्वनिसंज्ञां अभिधातात्पर्यलक्षणोत्तीर्णामुत्कृष्टाम् । देवीम् 'दिवु क्रीडाविजिगीषाद्युतिस्तुतिव्यवहारमोदमदकान्तिस्वप्नगतिषु' इति यथायथं धात्वर्थानामनुस्मरणात् शक्तिमतां कवीनां श्रोतॄणां च स्वभावात्स्वेच्छया समुच्छलन्तीं क्रीडन्तीम् । तथा देवीं विजिगीषुं शब्दं तत्संकीर्तितं चार्थमुपसर्जनीकृत्य वर्तमानाम् । तथा देवीं द्योतमानां द्योतनध्वननयोः पर्यायत्वाद्ध्वनिसंज्ञाम् । तथा देवीं स्तुत्यां सर्वैः काव्यात्मत्वादभिवन्द्याम् । तथा देवीं व्यवहरन्तीं सर्वत्र प्रचरितां न तु क्वापि स्खलिताम् । तथा देवीं मोदमानां श्रुतिमात्रेणैव परमानन्ददायिनीम् । तथा देवीं माद्यन्तीं कवेः सहृदयस्य च यथायथं करणावबोधाभ्यां कमप्यहंकारं जनयन्तीम् । तथा देवीं कमनीयां सर्वैरभिलषणीयाम् । त्रिविधविग्रहां त्रिविधस्त्रिप्रकारो विग्रहो व्यतिरेकेण ग्रहो व्यतिरेकमूलः प्रमाकरणप्रकारो यस्यास्ताम् । तथा हि 'गङ्गायां घोषः' इत्यादिवाक्येषु घोषस्य यच्छैत्यपावनत्वादिकं प्रतीयते तत्र नाभिधा । गङ्गादिशब्दानां शैत्याद्यर्थस्यावाचकत्वात् । न तात्पर्यात्मा । तात्पर्यशक्त्या ह्याधाराधेयभावावगमार्थं परस्परमन्वयमात्र एव क्षीणत्वात् । न लक्षणा । मुख्यार्थबाधादिहेतुत्रितयाभावात् । तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तचतुर्थकक्ष्यानिक्षिप्तो व्यञ्जनव्यापार इत्यादि सोऽयमेवाग्रे विमृष्यति विमर्षिणीकारः । अथ च व्यङ्ग्यस्य शब्दार्थोभयमूलत्वेन प्रसिद्धस्त्रिविधो विग्रहो विशेषणानां भेदानां ग्रहो यस्या इति वा । एतादृशीं तां नमस्कृत्य मङ्गलाचरणरूपत्वेन मनागुद्दिश्य न तु सूत्रवृत्तिभ्यां तात्पर्यकथनादिलक्षणपरीक्षाविस्तारेण निर्णीय निजालंकारसूत्राणां वृत्त्या तात्पर्यमुच्यत इति । अस्याभिप्रायः—तथा च ध्वनेर्मनागुद्देशमात्रमेव क-

इह हि तावद्भामहोद्भटप्रभृतयश्चिरंतनालंकारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयालंकारपक्षनिक्षिप्तं मन्यन्ते । तथाहि—पर्यायोक्ता-

---

रोति 'इह हि तावद्भामह–' इत्यादिना। तदेतत्तावदास्ताम्[1]। **निजेति।** परकीयाणां सूत्राणां तात्पर्यकथनानवबोधोऽपि स्यादिति भावः। तथा न कैश्चिदपि परैरीदृंशि सूत्राणि कृतानीत्यपि ध्वनितम्। **तात्पर्यमिति।** संक्षिप्तार्थप्रकाशनमित्यर्थः। अन्यथा हि कथनमेषां बहुनापि ग्रन्थेन पारं न यायात्। ननु 'आदिवाक्यं प्रयोक्तव्यमभिधेयप्रयोजने। प्रतिपादयितुं श्रोतृप्रवाहोत्साहसिद्धये[2] ॥' इति नीत्या श्रोतृप्रवृत्त्यर्थं सर्वत्रैवादिवाक्येऽभिधेयप्रयोजनाद्यभिधीयते। तच्चेह नोक्तमिति कथमत्र श्रोतॄणां[3] प्रवृत्तिः स्यात्। मैवम्। अलंकारा ह्यत्राभिधेयाः। तेषामत्र साक्षादेवाभिधानात्। तदभिधायकं चेदमलंकारसर्वस्वाख्यं प्रकरणमित्यभिधानाभिधेययोर्नियमगर्भीकारेणार्थाक्षिप्तो वाच्यवाचकभावलक्षणः संबन्धः। नह्येवंविधमेतदभिधायकं प्रकरणान्तरमस्ति। तस्यान्विष्यमाणस्याप्युपलम्भयोग्यस्यानुपलम्भात्। अत एवात्रान्यालंकारग्रन्थवैलक्षण्योद्घोषणाय 'तात्पर्यमुच्यते' इत्याद्युक्तम्। अभिधेयाश्चात्रालंकाराः काव्यालंकारा न लौकिका इत्येतेषां काव्योपस्कृतिद्वारेण पारम्पर्येण 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे।' इत्याद्युक्तनीत्या[4] तदविनाभावस्वभावत्वादर्थाक्षिप्तसर्वपुरुषार्थसिद्धिरूपा चतुर्वर्गावाप्तिः प्रयोजनम्। तयोश्च साध्यसाधनभावलक्षणः संबन्धः। इति स्थितमेवादिवाक्यस्य श्रोतृश्रवणश्रद्धाविर्भावनिबन्धनत्वम्। ननु[5] यदीहालंकारा अभिधेयास्तर्हि तदलंकार्योऽप्यभिधेयः। 'अलंकारा अलंकार्यापेक्षाः' इति नीत्या स एवैषां को नाम यदुपस्कारकत्वेनैतत्स्वरूपमभिधीयत इत्याशङ्क्य तदवतरणिकामेव[6] वक्तुमुपक्रमते—**इहेत्यादिना।** प्रभृतिना दण्ड्यादयः। तावच्छब्दो विप्रतिपत्त्यभावद्योतकः। **चिरंतनेत्यादि।** ध्वनिकारमतमेभिर्न दृष्टमिति भावः। **प्रतीयमानमिति।** वाच्यव्यतिरिक्तत्वेन स्वसंवेदनसिद्धमपीत्यर्थः। **अर्थमिति।** विश्रान्तिस्थानतया परमोपादेयतालक्षणम्। **वाच्योपस्कारकतयेति।** वाच्योपस्कारकत्वं ह्यलंकाराणामात्मभूतम्। **अलंकारपक्षनिक्षिप्त-**

---

१. ख-पुस्तके टीकायां प्रारम्भात्प्रभृति आस्तामित्यन्तो ग्रन्थो नास्ति. २. 'प्रवरोत्साह' ख. ३. 'श्रोतृप्रवृत्तिः' ख. ४. 'युक्त्या' क. ५. 'ननु च' ख. ६. 'तदवताणिकां' क.

**प्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः ।**

---

**मिति** । समग्रालंकारान्तर्भूतं न पुनस्तद्व्यतिरिक्तमित्यर्थः । **मन्यन्त इति** । तथात्वेन मन्यन्ते न पुनस्तथा संभवतीत्यर्थः । नह्यभिमननमात्रेणैव भावानामन्यथाभावो भवतीति भावः । एतदेव दर्शयति—**तथाहीत्यादिना** । तैर्वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन प्रतिपादितमिति संबन्धः । वस्तुमात्रं न पुनरलंकारा रसश्च । **स्वसिद्धय इति** । 'कुन्ताः प्रविशन्ति' इत्यादौ कुन्तैरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । तैर्विना तेषां प्रवेशासिद्धेः । 'गङ्गायां घोषः' इत्यादौ तु गङ्गाशब्दः परत्र तटे घोषाधिकरणतासिद्धये स्वात्मानमर्पयति । स्वयं तस्य घोषाधिकरणत्वासंभवात् । **यथायोगमिति** । क्वचिद्धि वाच्योऽर्थः स्वसिद्धये परं प्रतीयमानमर्थमाक्षिपति । क्वचिच्च स्वयमनुपपद्यमानः सन्प्रतीयमान एवार्थे स्वं समर्पयति । तेन यत्र यादृक्तत्र तादृगेव योज्यमित्यर्थः । तत्र पर्यायोक्तं यथा—'अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यां सौमित्रेरयमुपनिनायौषधिवनात् । इति स्मारं स्मारं त्वदरिवलभीचित्रलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥' अत्र राक्षसगणवृत्तान्तो वाच्यः सन् स्वसिद्धये परं कारणरूपमरिपलायनाद्याक्षिपति । तत्पलायनाद्यन्तरेण राक्षसवृत्तान्तस्यासंगतेः । अप्रस्तुतप्रशंसा यथा—'प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि । तस्यास्य स्मितमात्रकेण जनयन्प्राणापहारक्रियां भ्रातः प्रत्युपकारिणां धुरि परं वेताललीलायसे ॥' अत्र वेतालचरितमप्रस्तुतं प्रकरणादिवशेन स्वयमनुपपद्यमानं सत्प्रस्तुते कृतघ्नवृत्तान्ते स्वं समर्पयति । समासोक्तिर्यथा—'दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे । दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥' अत्र बोधिसत्त्वे नायकव्यवहारो न संभवतीति स्वसिद्ध्यर्थं नायकत्वमाक्षिपति । आक्षेपो यथा—किं[२] भणिभो भणइ किंत्ति अध किं

---

१. 'वाच्यसंस्कारकत्वेन' **ख.** २. 'किं भणामो भण्यते किमिति अथ किं वा अनेन भणितेन । भणिष्यसे तथापि अथवा भणामि किं वा न भणितोऽसि ॥' इति च्छाया.

वा इमेण भणिएण । भण्णिहिसि तह्वि अह्वा भणामिं किं वा ण भणिओसि ॥' अत्र वक्ष्यमाणविषयो भणननिषेधो वाच्यः सन्वक्तुमेवोपक्रान्तस्य निषेधानुपपत्तेः स्वयमविश्राम्यन्स्वात्मसमर्पणेन त्वां प्रति मरिष्यामि अथवा म्रिये यद्वा मृता यावदहमिति विधि[1]त्रयमर्थान्तरमाक्षिपति । यत्त्वत्रान्यैः 'वाच्योऽर्थः स्वसिद्धयेऽर्थान्तरमाक्षिपति' इत्युक्तं तद[2]युक्तमेव । तथात्वे हि निषेध एव पर्यवसितः स्यान्न निषेधाभास इत्याक्षेपालंकार एव न स्यात् । आमुखावभासमानो हि निषेध आक्षेपलक्षणम् । न च विधिनिषेधयोर्विरोधात्साध्यसाधनभावो युक्तः । व्याजस्तुतिर्यथा—'[3]इंहिणं पहुणोपहुणो पहुत्तणं किं चिरंतनपहूण । गुणदोसा दोसगुणा एहिँ कआ णहु कआ तेहिं ॥' अत्र चिरंतनानां निन्दा वाच्या सती स्वयमनुपपद्यमाना स्तुतावात्मानमर्पयति । तद्गतत्वेन वस्तुदर्शिताया निन्दाया असंभवात् । एवमद्यतनानामपि स्तुतिर्निन्दायामात्मानमर्पयति । तस्या अपि विपरीततया तद्गतत्वेनासंभवात् । यत्पुनरत्रान्यैः स्वसिद्धये पराक्षेपो व्याख्यातस्तदुपेक्ष्यमेव । यतोऽत्र चिरंतनानां स्तुत्याक्षेपेण निषिद्धा निन्दैव प्रतीयेत, अद्यतनानां च निन्दाक्षेपेण निषिद्धा स्तुतिरेवेति वाक्यार्थविप्रलोप एव पर्यवसितः स्यादिति नैतद्युक्तम् । किं च लक्षणायामपि स्वसिद्धये पराक्षेपो न युक्तः । तथात्वे हि लक्षणायाः स्वरूपहानिः स्यात् । वाच्यलक्षणस्यैव स्वस्य सिद्धत्वान्मुख्यार्थबाधाभावात् । न चैकदा एकस्य बाधः सिद्धिश्चेति वक्तुं युक्तम् । विप्रतिषिद्धं ह्येतत् । वाच्यस्यैव यद्यत्र सिद्धिस्तदभिधैव स्यान्न लक्षणा । तस्या हि मुख्यार्थबाध एव जीवितम् । 'कुन्ताः प्रविशन्ति' इत्यादौ च कुन्तानां स्वयं प्रवेष्टुमसंभवान्मुख्यार्थबाध एवेति परस्य कुन्तवद्रूपस्य लक्ष्यस्यैवार्थस्य प्राधान्यम् । अतश्च लक्षणायां बाधितः सन्मुख्योऽर्थः परत्र लक्ष्य एव स्वं समर्पयतीत्येव युक्तम् । ननु यद्येवं तत्पर्यायोक्तादौ वाच्यसिद्ध्यर्थं परस्य लक्ष्यस्याक्षेपः प्रतीयत इति तत्र किं प्रतिपत्तव्यम् । इदं प्रतिपत्तव्यम्—अत्र हि लक्षणाया एव नावकाशः । तत्र हि कथमहं स्यामिति वाच्यं सत्कार्यं तदविनाभावात्परं कारणमाक्षिपतीत्याक्षेपेणैव सिद्धेस्तस्या अनुपयोगः । 'गौरनुबन्ध्यः' इत्यत्र यथा कथं मे श्रुतिचोदितमनुबन्धनं स्यादिति जात्या व्यक्त्यविनाभावाद्व्यक्तिराक्षिप्यते न तु लक्ष्यते तथैवात्रापि कार्यकारणयोर्ज्ञेयम् ।

---

१. 'विधिरूपं' ख. २. 'तदयुक्तमेव । अत्र सम्यङ्निषेधोः न निषेधाभासः' ख. ३. 'अधुना प्रभवः प्रभवः प्रभुत्वं किं चिरंतनप्रभूणाम् । गुणदोषा दोषगुणा एभिः कृता न खलु कृता तैः ॥' इति च्छाया.

रुद्रटेन तु भावालंकारो द्विधैवोक्तः । रूपकपकापदीह्नुतितुल्ययोगि-

---

एवं समासोक्तावपि नायकव्यवहारस्तदविनाभावित्वादेव नायकत्वमाक्षिपतीत्य-त्रापि लक्षणामूलत्वं नाशङ्कनीयम् । ग्रन्थकृता पुनरेतच्चिरंतनमतानुवादपरतयो-क्तम् । अस्माभिस्तु प्रसङ्गाद्वस्तु पर्यालोचितमित्यलं बहुना । उपमेयोपमा यथा—'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः । भुवस्तलमिव व्योम कुर्वन्व्यो-मेव भूतलम् ॥' अत्र द्वयोः परस्परमुपमानोपमेयत्वं वाच्यं सत्स्वयमनुपपद्यमानमुप-मान्तरविरहलक्षणे परत्र वस्त्वन्तरे स्वं समर्पयति । अनन्वयो यथा—'भवानिव भवानेव भवेद्यदि परं भव । स्वशक्तिव्यूहसंव्यूढत्रैलोक्यारम्भसंहृतिः ॥' अत्रै-कस्यैवोपमानोपमेयभावो वाच्यः सद्द्वितीयसब्रह्मचार्यभावे परत्र वस्त्वन्तरे स्वं समर्पयति । आदिशब्दः प्रकारे । तेनानिष्टविध्याभासाक्षेपादेर्ग्रहणम् । यथा—'भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः । तव यदि तथा रूढं प्रेम प्रपन्नमिमां दशां प्रकृतितरले का नो व्रीडा गते हतजीविते ॥' अत्र कान्तप्रस्थानविधिर्वाच्यः सन्निषेद्धुमेवोपक्रान्तस्य विधा-नानुपपत्तेः स्वयमविश्रान्तः स्वसमर्पणेन निषेधमाक्षिपति । एवं द्विविधया भङ्ग्या गम्यमानं वस्तुमात्रं वाच्योपस्कारकमेवेत्युक्तम् ।

एवमपि प्रतीयमानस्यार्थस्य विविक्तविषयान्तरोपालम्भादलंकारान्तर्भावो न सिध्यतीत्याशङ्क्याह—**रुद्रटेनेत्यादि । द्विधेति** । गुणीभूतागुणीभूतवस्तु-विषयत्वेनेत्यर्थः । यदाह—'यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन । गमयति तदभिप्रायं तत्प्रतिबद्धं च भावोऽसौ ॥ ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसना-थकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ अभिधेयमभिदधानं तदेव तदसदृशगुणदोषम् । अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥ एका-किनी यदबला तरुणी तथाहमस्मद्गृहे गृहपतिः स गतो विदेशम् । कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥' इति । यद्वा द्विधेति पूर्ववदेव लक्षणाद्वयाश्रयेण व्याख्येयम् । तेनाद्ये स्वसिद्धये पराक्षेपः, परत्र तु अपरार्थं स्वसमर्पणम् । यत्त्वत्रान्यैर्भावैर्निर्वेदादिभिरुपलक्षितो वाच्यप्रतीयमान-त्वेन द्विविधो भावालंकारो व्याख्यातस्तदुत्सूत्रमेव । रुद्रटेन तथात्वेन तस्याप्र-तिपादनात् । तत्रापि च वस्तुमात्रस्य वाच्योपस्कारकत्वाभिधानसमये वक्तुमु-चितत्वात् । तदेवं गुणीभूतागुणीभूतत्वेन द्विप्रकारं वस्तु तावद्वाच्योपस्कारक-

तादावुपमाद्यलंकारो वाच्योपस्कारकत्वेनोक्तः। उत्प्रेक्षा तु स्वयमेव प्र-

---

त्वेन प्रतिपादितम् । इदानीमलंकारस्यापि प्रतीयमानस्य वाच्योपस्कारकत्वं प्रतिपादयति—**रूपकेत्यादिना** । तत्र रूपकं यथा—'भीमभ्रूकुटिपन्नगीफणमणिः कामस्य चण्डं चिताकुण्डं कुण्डलितेन्दुनालवलयप्रभ्रंशिरक्तोत्पलम् । घ्राणस्फाटिकमल्लिकापरिचिते भालाग्रशालाजिरे दीप्रा दीपशिखा शिवस्य नयनं कार्शानवं पातु नः ॥' अत्र नयनादीनां मणिप्रभृतीनां चोपमा वाच्योपस्कारायावगम्यते । तां विना सादृश्याप्रतिपत्तेः । दीपकं यथा—'पाउअबंधं पढिउं बंधेउं तह अ कुज्जकुसुमाइं । पोढमहिलं अ रमिउं विरलच्चिअ के वि जाणन्ति ॥' अत्र प्राकृतबन्धपाठादेरुपमा वाच्योपस्कारायावगम्यते । प्रकृतस्य प्रौढमहिलारमणादेः सादृश्योपादानायैवोभयोरुपनिबन्धनात् । अपह्नुतिर्यथा—'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि । अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥' अत्र कलङ्कस्य रजनिसादृश्यप्रतीतेरुपमा वाच्योपस्कारायावगम्यत एव । तुल्ययोगिता यथा—'द्विगुणितादुपधानभुजाच्छिरः पुलकितादुरसः स्तनमण्डलम् । अधरमर्धसमर्पितमाननाद्व्यघटयन्त कथंचन योषितः ॥' अत्र भुजादीनां सादृश्यावगमादुपमा वाच्योपस्कारायावगम्यते । तुल्ययोगितादावित्यादिशब्दान्निदर्शनादेर्ग्रहणम् । उपमादीत्यादिशब्दादुपमेयोपमादीनाम् । तत्तु यथा—'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः । तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥' अत्र वाच्याया निदर्शनाया उपस्कारकत्वेनोपमेयोपमा गम्यते । तामन्तरेणासंभवद्वस्तुसंबन्धत्वेन वाच्यस्याविश्रान्तेः । अतश्चात्रालंकारो गम्यमानः स्थितो न वस्तुमात्रम् । तेन पूर्वत्र यदादिग्रहणं सफलयितुमन्यैरेतदुदाहृतं तदयुक्तमेव । तत्र वस्तुमात्रस्य वाच्योपस्कारकत्वेन प्रतिपिपादयिषितत्वात् । वाच्योपस्कारकत्वेनेत्युत्तरत्रापि योजनीयम् । तेन वाच्योपस्कारकत्वेनोत्प्रेक्षा कथितेति समन्वयः । सा तु—'महिलासहस्सभरिए तुय हिअए सुहअ सा

---

१. मल्लिका दीपाधारदण्डः. २. 'प्राकृतबन्धं पठितुं बद्धुं तथा च कुब्जकुसुमानि । प्रौढमहिलां च रन्तुं विरला एव केऽपि जानन्ति ॥' इति च्छाया. ३. 'महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती । दिवसमनन्यकर्मा अङ्गं तनुकमपि तनूकरोति ॥' इति च्छाया.

तीयमाना कथिता । रसवत्प्रेयःप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः । तदित्थं द्विविधमपि प्रतीयमानमलंकारतया ख्यापितमेव ।

वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता

---

अमायन्ती । दिअहं अणण्णअम्मा अङ्गं तणुअं पि तणुएइ ॥' इति । तदित्थमलंकारोऽपि प्रतीयमानो वाच्यशोभाहेतुत्वेनोक्तः । अधुना रसस्यापि वाच्योपस्कारकत्वं दर्शयितुमाह—**रसवदित्यादि** । प्रभृतिशब्दादूर्जस्व्यादयः । आदिशब्दाच्च तदाभासादयः । तत्र रसवदलंकारो यथा—'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता । मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥' अत्र वत्सराजस्य परस्परास्थाबन्धरूपो रत्याख्यः स्थायिभावो विभावानुभावव्यभिचारिसंयोगाद्रसीभूतः सन्वाच्योपस्कारकः । तत्संवलितत्वेन[1] वाच्यस्य सचमत्कारं प्रतिपत्तेः । प्रेयोलंकारो यथा—'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः । तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥' अत्र वितर्काख्यो व्यभिचारिभावो वाच्यशोभाधायक[2] एव । ऊर्जस्व्यलंकारो यथा—'दृग्लीलासु सकौतुकं यदि मनस्तन्मे दृशां विंशतिर्निःसंधौ परिरम्भणे रतिरथो दोर्मण्डली दृश्यताम् । प्रीतिश्चेत्परिचुम्बने दशमुखी वैदेहि सज्जा पुरः पौलस्त्यस्य च राघवस्य च महत्पश्योपचारान्तरम् ॥' अत्र सीतां प्रति रावणस्य[3] रतिरनौचित्येन प्रवृत्तेति रसाभासो वाच्योपस्कारकः । अन्यत्तु स्वयमभ्यूह्यम् । एतदेवोपसंहरति—**तदित्थमित्यादिना** । **त्रिविधमिति** । पर्यायोक्तादौ वस्तु, रूपकादावलंकारः, रसवदादौ रसः । तदेवं चिरंतनैः प्रतीयमानस्यालंकारान्तर्भाव एव तावदुक्तः । तदुपस्कार्यः । पुनरात्मा कैश्चिदपि नाभ्युपगतः । वामनेन प्रतीयमानस्यालंकारान्तर्भावमभिदधतापि तदुपस्कार्य आत्मा कश्चिदुक्त इत्याह—**वामनेनेत्यादि** । तुशब्दः पूर्वेभ्यो व्यतिरेकद्योतकः । आत्मनोऽपि प्रतिपादकत्वात् । **ब्रुवतेति** । यदाह—'सादृश्याल्लक्षणा वक्रोक्तिः' इति ।

---

१. 'विभावादीनां पर्ययेन तत्संवलितत्वेन' **ख.** २. 'दायकः' **क.** ३. 'राघवस्य' **ख.**

कवाक्यतया यद्यविच्छेदेन प्रतिपत्तिप्ररोहः स्यात्तदात्रापि संसृष्ट्याद्यभ्युगमे न कश्चिद्दोषः । ननु समग्रताप्रत्यये चित्रज्ञाने वा स्थाल्यादीनां चैकेन्द्रियग्राह्यत्वेन समानजातीयानामेकबुद्ध्यधिरूढादुपपद्यत एव सामगादेरेकस्य वस्तुनोऽवगमः । इह तु भिन्नेन्द्रियग्राह्यत्वेन भिन्नजातीययोः शब्दार्थयोरेकबुद्ध्यधिरूढाभावात्तदलंकाराणां युगपत्प्रतीतिरेव नास्तीति कथमेकस्य संसर्गादेर्वस्तुनोऽवभासो यस्यापि संसृष्ट्याद्यलंकारान्तरव्यपदेशार्हत्वं स्यात् । अत्रोच्यते । श्रोत्रकरणत्वाच्छब्दावगमस्यैकेन्द्रियग्राह्यत्वात्तदलंकारयोः सजातीयत्वे तावदविवादः । अत एव च तयोरेकबुद्ध्यधिरोहाद्युगपत्प्रतीतेः संसर्गावगमः । सति च संचये चारुतातिशयोपसर्जन इत्यत्र संसृष्टाद्यलंकारत्वम् । एवमर्थावगमस्यापि शब्दकरणत्वात्समानजातीययोः संसृष्टत्वेन प्रतीयमानयोरलंकारयोरपि ज्ञेयम् । शब्दार्थयोः पुनरुपायभेदेऽपि तदलंकाराणां सुगन्धिबन्धूकबोधन्यायेन मानसबोधन्यायेन मानसज्ञानविषयत्वाद्युगपदवभासः सिद्ध्यतीति लौकिकालंकारवदेव शब्दार्थोभयालंकाराणां संसर्गे लब्धपरभागतयावभासत एव चारुत्वान्तरमिति न्यायप्राप्तमेव संसृष्ट्याद्यलंकारत्वम् । यत्पुनरन्यैः शब्दार्थयोर्भिन्नजातीयत्वे भिन्नेन्द्रियग्राह्यत्वं निमित्तमुक्तं तदुपेक्ष्यमेव । शब्दार्थशरीरे काव्ये शब्दप्रतिपाद्यस्यैवार्थस्याङ्गत्वात्तचक्षुरिन्द्रियग्राह्यस्य बाह्यस्यानौपयिकत्वात् । यद्येवं पूर्वलक्षितानामनुप्रासोपमादीनामभावः स्यात्, असंकीर्णानामलंकाराणामसंभवात्सर्वत्र संसृष्टिसंकरयोरेव भावादेषां विषयापहारात् । नैतत् । असंकीर्णानामलंकाराणां सहस्रशो दर्शनात् । तथाहि— 'यशोवर्माणमुल्लङ्घ्य हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम् ॥ उत्तराः कुरवोऽविक्षुस्त्वद्भयाज्जन्मपादपान्[1] । उरगान्तकसंत्रासाद्बिलानीव महोरगाः ॥ जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलम् । भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलम् ॥ राजतान्क्वापि सौवर्णान्क्वापि देवान्विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः ॥ तुः खारश्चङ्कुणश्चक्रे स्वनामाङ्कविहारकृत् । भूपचित्तोपमं स्तूपं जिनार्हसमयास्तथा ॥ ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितम् । सुधारसमिव स्वच्छमारोग्यादायि रोगिणाम् ॥ संजग्राह स देशेभ्यस्तांस्तानन्तरविज्जनान् । विकचान्सुमनःस्तोमान्पादपेभ्य इवानिलः ॥ अभेद्यसारे मयि तु व्यक्तमेवं विधीयते । प्रयासः कुण्ठतां यातो लोहे वज्रमणाविव ॥ निदेशेनैव संपश्य पयः सूतेऽद्य मेदिनी । रसितेनाम्बुवाहस्य रत्नं वैडूर्यभूरिव ॥

---

१. 'अविक्षन्' इति राजतरङ्गिण्याम्.

स्फुटावगमो भेदः, समवायन्यायेन वास्फुटत्वावगम इति द्वैधम्। पूर्वत्र संसृष्टिः, उत्तरत्र संकरः। अत एव तिलतण्डुलन्यायः, क्षीरनीरन्यायश्च तयोर्यथार्थतामवगमयतः। तत्र तिलतण्डुलन्यायेन भवन्ती संसृष्टिस्त्रिधा। शब्दालंकारगतत्वेन, अर्थालंकारगतत्वेन, उभयालंकारगतत्वेन च। तत्र शब्दालंकारसंसृष्टिर्यथा—

'वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया॥'

---

इत्युक्त्वा सोऽम्बु निष्क्रष्टुं कुन्तेनोर्वीमदारयत्। उज्जिहीर्षुर्वितस्ताम्भः शूलेनेव त्रिलोचनः॥ श्रुते प्रणष्टे नगरे निःशोकोऽभून्महीपतिः। स्वप्नान्तर्हारिते पुत्रे प्रबुद्धोऽग्र इवेक्ष्यते॥ अत्रस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः। चार्वाकाणामिवैषां हि भयं न परलोकतः॥' इत्यादि राजतरङ्गिण्यां ललितादित्यवर्णने उपमायाः शुद्धमुदाहरणजातम्। एवमत्रैवान्यराजवर्णने प्रबन्धान्तरेषु वा शुद्धाया उपमायाः कियान्विषय इति को नाम दर्शयितुमलम्। उपमैव चानेकालंकारबीजभूतेति तन्निदर्शनमेव कृतम्। एवमन्यालंकाराणामपि सहस्रशश्चात्रोदाहरणत्वं संवददपि ग्रन्थविस्तरभयान्न दर्शितम्। तस्मादेषां विषयत्वं प्रविरलविषयत्वं च न वाच्यम्। प्रविरलविषयत्वेऽप्युपमादीनां न संसृष्टिसंकरयोरेवं लक्षणीयतया प्राप्तिस्तावन्मात्रविषयस्वीकारायाप्येषां पृथग्लक्षयितुमुचितत्वात्। एवं च न संसृष्टिः। पूर्वहाराचारुत्वाभावाच्चेत्याद्युक्तमयुक्तम्। अत एव च 'तस्मात्समस्तविषये प्रतिबन्धकारे संसृष्टिसंकथने चलिते विदूरम्। प्राधान्यतः स्वविषयं सुविशालमाप्य सर्वोऽप्यलंकृतिगणो रसतां चिराय॥' इत्याशीर्वचनसूक्तमपि निष्प्रयोजनम्। नन्वेवं यद्यलंकारान्तरत्वं युक्तं तदेक एव संसृष्टिः संकरो वास्तु, किं द्वाभ्यामित्याशङ्क्याह—[अलंकारान्तरत्वेऽपि चेति।] श्रीभोजदेवेन पुनर्भे-

---

१. 'वलितया' क. २. 'अविषयत्वं' ख. ३. 'एकलक्षणीयतया' क. ४. 'एषा' क. ५. पुस्तकद्वयेऽप्यत्र च्छन्दोभङ्गो दृश्यते. ६. पुस्तकद्वयेऽपि प्रतीकमेतन्न गृहीतम्.

अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः । अत्रैव 'अलकलोलकलोल' इति, तथा 'कलोलकलोल' इति सजातीययोर्यमकयोः संसृष्टिः । अर्थालंकारसंसृष्टिर्यथा—

'देवि क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव सभृङ्गमब्जम् ।
एष त्वदाननरुचेव विलुण्ठ्यमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः ॥'

अत्र विजातीययोरुपमोत्प्रेक्षयोः संसृष्टिः ।

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥'

---

दस्य स्फुटास्फुटत्वमाश्रित्य नानालंकारसंकरः संसृष्टिरिति संकीर्णमात्राभिप्रायेण संसृष्ट्याख्य एक एवालंकार उक्तः । **विजातीययोरिति** । यमकानुप्रासयोर्भिन्नलक्षणत्वात् । अत्र च प्रधानस्यानुप्रासस्य परिपोषकत्वेनाङ्गं यमकमिति संकरोदाहरणं न वाच्यम् । अत्र हि यमकसर्गस्योपक्रान्तत्वात्तत्रैव कवितुः संरम्भातिशयाद्यमकस्य प्राधान्यमित्यनुप्रासस्य यमकं प्रति वरमङ्गत्वं युक्तं, न पुनर्विपर्ययः । सकलवाक्यव्यापिनोऽप्यनुप्रासस्य प्राधान्येनाविवक्षणात् । नाप्यत्र परस्परमङ्गाङ्गिभावो युक्तः । इह हि निमित्तानिमित्तभावेनोपकार्योपकारकभावेन चेति द्विधाङ्गाङ्गिभावः । तत्राद्यो द्विधा । सार्वत्रिकः, प्रादेशिकश्चेति । तत्र सार्वत्रिको यथा विभावनातिशयोक्त्योः । 'आश्लिष्टातिशयोक्तिस्तु सर्वत्रैव विभावना' इति दृशा विभावनायाः सर्वत्रैवातिशयोक्त्यपेक्षात्[1] । प्रादेशिको यथा श्लेषातिशयोक्त्योः । 'रजनीमुखम्' इत्यादौ क्वचिदिव श्लेषवशेनातिशयोक्तेरुत्थानात् । 'कमलमनम्भसि' इत्यादौ श्लेषमन्तरेण[2] तस्याः संभवात् । एतद्भेदद्वयं च न संकरस्य विषयः । तस्य स्वहेतुबलाल्लब्धसत्ताकानामलंकाराणां संसर्गे वक्ष्यमाणत्वात् । द्वितीयो यथा— 'अङ्गुलीभिरिव' इत्यादौ । अत्र हि स्वहेतुबलेन लब्धसत्ताकानामुपमादीनां परस्प-

---

१. 'अपेक्षत्वात्' ख. २. 'श्लेषमन्तरेणापि' ख.

रमुपकार्योपकारकत्वमात्रं येनाङ्गाङ्गिभावः। न ह्यत्रोपमयोः परस्परं स्वरूपनिष्पत्तावुपेक्षा काचित्। एकतराभावेऽप्येकस्याः स्वरूपोत्थानात्। एवमुपमाद्वयपरिहारेण केवलाप्युत्प्रेक्षा स्यात्। स्थितानां पुनरेषामियं चिन्ता यच्चुम्बने केशग्रहणादेरुचितत्वादुपमाद्युपकारकमुत्प्रेक्षा चोपकार्या येनाङ्गाङ्गिभावः। एवं च तेन प्रधानतायामुपमादीनां निजं निजं नाम। अङ्गत्वे पुनरेषां संकरादीनामङ्गाङ्गिभावेऽपीत्याद्यन्यैरयुक्तमेवोक्तम्। इह पुनर्यमकानुप्रासयोर्निमित्तनिमित्तिभावः। सर्वत्रैवानयोः स्वरूपनिष्पत्तावन्योन्यानपेक्षत्वात्। तत्त्वेऽपि समनन्तरोक्तयुक्त्या संकरायोगात्। नच स्वहेतुभ्यो लब्धसत्ताकयोरप्यनयोः परस्परमङ्गाङ्गिभावः। शब्दालंकारयोः शब्दवदुपकार्योपकारकत्वभावात्। अथ वर्णसावर्ण्येन वैचित्र्यातिशयाधायकत्वेनानयोरुपकार्योपकारकभाव इति चेत्। न। इयमेव हि संसृष्टिर्द्वयोर्बहूनां वालंकाराणां परस्परनिरपेक्षाणामपि संसर्गे सति चारुतातिशयप्रतिपत्तिः। एवमर्थालंकारसंसृष्टावपि संकरोदाहरणत्वं न वाच्यम्। न हि तत्रोपमोत्प्रेक्षयोः परस्परमुपकार्योपकारकभावाद्यात्माङ्गाङ्गिभावः। यद्येवं दशदाडिमादिवाक्यवचनयोरसंबद्धत्वं स्यादिति चेत्, न। चक्षुरुन्मीलनात्मके एकस्मिन्नेव प्रधानेऽर्थे द्वयोरपि समृद्धत्वात्। न च पाकलक्षणमेकमेवार्थमुररीकृत्य व्यवस्थितानां स्थाल्यादीनामप्यन्यः कश्चित्संबन्धः। अथोपमालिङ्गितस्य चक्षुरुन्मीलनस्योत्प्रेक्षाश्लिष्टः शशाङ्काम्बरत्यागः पारम्पर्येण हेतुत्वेनोपनिबद्ध इति स्वाश्रयभूतार्थवदनयोरप्यङ्गाङ्गिभावोऽस्तीति चेत्। नैतत्। उपमाद्यालिङ्गनाभावेऽपि चक्षुरुन्मीलनादेर्हेतुहेतुमद्भावानतिपातादवस्थितत्वे वा तयोरुक्तयुक्त्या परस्परं संबन्धाभावात्। नाप्यत्रोपमाया वाक्यार्थत्वम्। तस्या अप्युत्प्रेक्षादिवचक्षुरुन्मीलनाङ्गत्वेनावस्थानात्। अत्र हि चक्षुरुन्मीलनस्यैव वाक्यार्थत्वम्। शशाङ्काम्बरत्यागोपपादितस्य क्षपागलनस्य तं प्रत्येव हेतुत्वेनोपनिबन्धात्। एवं परं प्रत्युपसर्जनीभूतयोरवान्तरसंबन्धाभावेऽप्युपमोत्प्रेक्षयोः संसर्गे सति चारुत्वातिशयोपसर्जन इति यथोक्तमेव संसृष्ट्युदाहरणत्वं युक्तम्। एवम् 'अन्योन्यसंबन्धविवर्जितानामलंकृतीनां विनिवेशनं चेत्। अनन्वितत्वाद्दशदाडिमादिवाक्यादिवद्दूषणमेव तर्हि॥ अथान्वयोऽस्त्येव परस्परं तद्गुणप्रधानत्वमवश्यमेष्यम्। तदा न संसृष्टिकथा गुणस्य पराङ्गतायां खलु संकरः स्यात्॥ एकत्र चेदङ्गिनि संगतं स्याद्वयं तदन्योन्यसमीलनेन। न संकरो नापि न वा गुणत्वे कार्यान्तरोत्पादनशक्तियोगात्॥' इत्याद्युपेक्षणीयमेव। न चात्रायमालंकार इत्यार्थोऽलंकारसमुच्चय इति वाच्यम्। धर्म-

अत्रोपमोत्प्रेक्षयोर्विजातीययोः संसृष्टिः । उभयसंसृष्टिर्यथा—

'आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे[1] विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥'

अत्रोपमानुप्रासयोः संसृष्टिः । पादाम्बुजमित्यत्र ह्युपमाया मञ्जीरशिञ्जितयोगो व्यवस्थापकं प्रमाणम् । स हि रूपके प्रतिकूलः पारिशेष्यादुपमां प्रसाधयति । तदेवं संसृष्टिस्त्रिधा निर्णीता ।

अधुना क्षीरनीरन्यायेन संकर उच्यते—

---

यौगपद्यमन्यस्यापि तत्करत्वं च समुच्चय इत्युक्त्या भवन्मतेऽप्यलंकारयौगपद्यस्य तल्लक्षणत्वाभावात् । तथात्वाभ्युपगमे चायं नाम्नि विवादः । एवं हि संसृष्ट्या किमपराद्धम् । 'अत्र चोद्यं करिष्यामि' इत्याशयेन सजातीययोरुपमयोः संसृष्टिरित्यशुद्धं पठित्वा यदन्यैरुक्तं तदुपेक्ष्यमेव । अत्र हि विजातीययोरुपमोत्प्रेक्षयोः संसृष्टिरिति सर्वत्रैव सुस्पष्टः पाठः । **उत्प्रेक्षयोरिति** । प्रथमार्धगतयोः । यद्यपि चानयोर्द्वितीयार्धगतयाप्युपमया संसर्गे संसृष्टिरेव, तथापि विजातीययोरुपमोत्प्रेक्षयोरुदाहृतत्वात्सजातीयाभिप्रायेणैवमुक्तम् । नाप्यत्रोत्प्रेक्षाद्वयमुपमाहेतुभूतमिति वाच्यम् । त्रयाणामप्यलंकाराणां वाक्यार्थीभूतं तमोबाहुल्यं प्रत्यङ्गत्वात् । **उभयसंसृष्टिरिति** । अनुप्रासोपमयोः शब्दार्थालंकारत्वात् । **व्यवस्थापकमिति** । मञ्जीरशिञ्जितयोगस्य पादगतत्वेनौचित्यात् । **प्रतिकूल इति** । अम्बुजस्य मञ्जीरशिञ्जितायोगात् । **पारिशेष्यादिति** । उपमारूपकाभ्यामन्यस्याप्राप्तेः । एतदेवोपसंहरति—**तदेवमित्यादि** । **त्रिधेति** । यद्यपि सजातीयविजातीयत्वेनान्यदप्यस्याः संभवति भेदद्वयम्, तथापि तदुद्दिष्टस्यैवान्तर्भवतीति यथोक्त एवायमुपसंहारः ॥ इदानीं संकरमवतारयति—**अधुनेत्यादि** ।

---

१. 'ते' क.

क्षीरनीरन्यायेन तु संकरः ।

मिश्रत्व इत्येव । अनुत्कटभेदत्वमुत्कटभेदत्वं च संकरः । तच्च मिश्रत्वमङ्गाङ्गिभावेन संशयेन, एकवाचकानुप्रवेशेन च त्रिधाभवत्संकरं त्रिभेदमुत्थापयति । क्रमेण यथा—

'अङ्गुलीभिरिव केशसंचयं संनियम्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

अत्राङ्गुलीभिरिवेत्युपमा । सैव सरोजलोचनमित्यस्या उपमायाः प्रसाधिका । रजनीमुखमिति श्लेषमूलातिशयोक्तिः । प्रारम्भवदनाख्ययोर्मुख्ययोरभेदातिशयात् । अत एव तयोरङ्गाङ्गिभावः । एवं च वाक्योक्तसमासोक्तिः । उपमाश्लेषानुगृहीता चातिशयोक्तिरुत्प्रेक्षया 'चुम्बतीव' इति प्रकाशिताया अनुग्राहिका । तद्बलेन तस्याः समुत्थानात् । सा च समुत्थापिता समुत्थापकानां चमत्कारितानिबन्धनमित्यस्त्यङ्गाङ्गिभावः । यथा वा—

'त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान् ।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्ध्यै वडवाग्निमध्यम् ॥'

---

तदेवाह—**क्षीरेत्यादि** । **तदिति** । यथोक्तरूपम् । **त्रिभेदमिति** । अङ्गाङ्गिभावादिना । **प्रसाधिकेति** । आनुगुण्यकारित्वेनाङ्गमित्यर्थः । **श्लेषमूलेति** । श्लेषहेतुकेत्यर्थः । अत्र च यथाङ्गाङ्गितया संकरस्तथा पूर्वमेवोक्तम् । अत एवोपमाद्वयापेक्षयैव तयोरङ्गाङ्गिभाव इत्युपसंहारः । **श्लेषानुगृहीतेति** । श्लेषमन्तरेणास्या अनुत्थानात् । **तद्बलेनेति** । तेषामुपमादीनां बलेनोपकारकत्वेनेत्यर्थः । **समुत्थानादिति** । उपकार्यत्वेन । उदाहरणान्तरोपादानं दावाप्ति(?)प्रदर्शनप-

अत्र प्रथमार्धे विरोधोत्पत्तिहेतुः श्लेषः । दर्शनान्तरे तु विरोधश्लेषौ द्वावलंकारौ । तदनुगृहीता द्वितीयेऽर्धे मन्येपदप्रकाशितोत्प्रेक्षा । अतश्चाङ्गाङ्गिभावः ।

तथाह्यत्र यत्कारणमुत्प्रेक्षते तत्र विरोधश्लेषानुप्रवेशः । यच्चात्र कार्यमुत्प्रेक्षानिमित्तं तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथास्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ । तेनात्राङ्गाङ्गिभावः संकरः । न च विरोधोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभावः संकरः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहायं संकरः, ताभ्यां विना तयोरनुत्थानात् । अतश्च निरवकाशत्वाद्बाधकत्वम् । न च मन्तव्यं विरोधमन्तरेणापि श्लेषो दृश्यत इति श्लेषस्य सावकाशत्वमिति । यतो न ब्रूमो विरोधमन्तरेणापि श्लेषो न भवतीति । किं तर्ह्यलंकारान्तरविविक्तो विषयः श्लेषस्य नास्तीति निरवकाशत्वा-

---

रम् । **श्लेष इति** । औद्भटानामिति शेषः । **द्वावलंकाराविति** । हेतुहेतुमद्रूपावित्यर्थः । श्लेषमन्तरेण विरोधस्यानुत्थानात् । **तदनुगृहीतेति** । श्लेषमूलविरोधोपकृतेत्यर्थः । अङ्गाङ्गिभावमेव विभजति—**तथा हीत्यादिना** । **कार्यमिति** । पतितत्वाग्निप्रवेशलक्षणम् । एतच्चोत्प्रेक्षानुगुण्येन प्रसङ्गादिहोक्तम् । **तेनेति** । उत्प्रेक्षाविरोधोपकृतत्वेन । ननु विरोधोत्प्रेक्षयोर्यद्वदङ्गाङ्गिभावेन संकरस्तद्वदतिशयोक्त्यापि सह तस्या विरोधश्लेषयोश्च किं संकर उत नेत्याशङ्क्याह—**न चेत्यादि** । एतच्चोद्भटमतानुसारश्लेषस्य प्राधान्याभिप्रायेणोक्तम् । स्वपक्षाभिप्रायेण तु विरोधस्याप्येतदेव द्रष्टव्यम् । अत्र च यथा न संकरालंकारस्तथा पूर्वमेवोपपादितम् । अत्र ह्युभयथाप्येक एवालंकारः । न चैकस्य संकरो युक्तः । तस्य द्विप्रभृतीनामलंकाराणां मिश्रत्वे संभवात् । **अतश्चेति** । विरोधगुणीभावेन श्लेषस्यैव समुत्थानात् । यत्तु ग्रन्थकृता स्वमताश्रयेणैतदपि नोक्तम्, तत्रायमाशयः । यावता हि यत्रालंकारान्तरस्वरूपनिष्पादने हेतुत्वं भजते तत्र नायमलंकार इति प्रतिपाद्यम् । तच्चैवमपि सिद्ध्यतीति तन्मतेनाप्येतत्साधनं चिरंतनाभ्युपगतत्वा-

चेषां बाधः । तन्मध्ये च विरोधोऽनुप्रविष्ट इति सोऽपि तेन बाध्यत इति न कश्चिद्दोषः । एवमर्थालंकारसंकर उक्तः । शब्दालंकारसंकरस्तु कैश्चिदुदाहृतो यथा—

'राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥'

अत्र यमकानुलोमप्रतिलोमयोः शब्दालंकारयोः परस्परापेक्षत्वेनाङ्गाङ्गिसंकर इति । एतत्तु न सम्यगावर्जकम् । शब्दालंकारयोः शब्दवदुपकार्योपकारकत्वाभावेनाङ्गाङ्गिभावाभावात् । शब्दालंकारसंसृष्टिस्त्वत्र श्रेयसी । यथोदाहृतं पूर्वम् ।

यद्वा अत्र शब्दालंकारद्वयमेकवाचकानुप्रविष्टमिति तृतीयः संकरो ज्ञेयः । एवमेकः प्रकारो दर्शितो द्वितीयः प्रकारस्तु संदेहसंकराख्यः । यत्रान्यतरपरिग्रहे साधकं प्रमाणं नास्ति बाधकं वा प्रमाणं न विद्यते तत्र न्यायप्राप्तः संशय इति संदेहसंकरस्तत्र विज्ञेयः । यथा—

'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥'

---

भ्यनुज्ञानात्मप्रयोजनम् । **तन्मध्य इति** । श्लेषाद्व्यतिरिक्तानामन्येषामलंकाराणां मध्य इत्यर्थः । **दोष इति** । सावकाशत्वापत्तिरूपः । **कैश्चिदिति** । काव्यप्रकाशकारादिभिः । **उदाहृतमिति** । कुसुमसौरभेत्यादिना । **यद्वेति** । पक्षान्तरे । **एकवाचकेति** । य एव शब्दा यमकस्य वाचकास्त एव चित्रस्येति द्वितीय इत्यङ्गाङ्गिभावात् । **साधकमिति** । अनुकूलम् । **न्यायप्राप्त इति** ।

अत्र विभावनाविशेषोक्त्योः संदेहसंकरः । तथाह्युत्कण्ठाकारणाभावे उत्कण्ठाया उत्पत्तौ विभावना । स च कारणाभावो 'यः कौमारहरः' इत्यादिना कारणविरुद्धमुखेन प्रतिपादितः । तथा च 'यः कौमारहरः' इत्याद्यनुत्कण्ठाकारणसद्भावेऽपि अनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः । सा चानुत्पत्तिः 'समुत्कण्ठते' इति विरोधोत्पत्तिमुखेनोक्ता । अत एव द्वयोरप्यस्फुटत्वमन्यत्रोक्तम् । न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति संदेहसंकरोऽयम् । यथा वा—

'यद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलादुल्लिखितश्चकास्ति ।
उद्दामरामाहृढमानमुद्राविद्रावणो मन्त्र इव स्मरस्य ॥'

अत्र वक्त्रं चन्द्र इवेति किमुपमा, उत वक्त्रमेव चन्द्र इति रूपकमिति संशयः । उभयथापि समासस्य भावात् । 'उपमितं व्याघ्रादिभिः' इत्युपमासमासः, व्याघ्रादीनामाकृतिगणत्वात् । मयूरव्यंसकादित्वाद् रूपकसमासः, मयूरव्यंसकादीनामाकृतिगणत्वात् । न चात्र क्वचित्साधकबाधकप्रमाणसद्भाव इति संदेहसंकरः—

---

साधकबाधकप्रमाणाभावादेकस्यानिश्चयात् । संदेहमेवोपपादयति—**तथाहीत्यादिना** । **उत्कण्ठाकारणाभाव इति** । कौमारहरवराद्यसंनिधानरूपस्य कारणस्याभाव इत्यर्थः । **विरुद्धमुखेनेति** । तत्संनिधानद्वारेणेत्यर्थः । **अत एवेति** । द्वयोरपि विरुद्धमुखेनोपनिबन्धात् । **अन्यत्रेति** । काव्यप्रकाशादौ । **उभयथेति** । उपमारूपकत्वेनेत्यर्थः । चन्द्रशब्दस्याकृतिगणत्वाद्गणद्वयेनापि हि स्वीकृतत्वमिति भावः । **क्वचिदिति** । उपमायां रूपके वा । न चैतदलंकारसारकारादीनां मतम्, अलंकाराणां संदेहायोगात् । तथाहि स्थाणुर्वा पुरुषो वेति संदेहः कस्यचिदेव कदाचिद्भवति, न तु सर्वदैव सर्वेषां संनिकृष्टानां तदैवानन्तरं त्वन्येषामपि निश्चयोत्पादनात् । सर्वदा सर्वत्र सर्वान्प्रति चालंकारलक्षणं प्रणयनम् । तथात्वे च संदेहोऽयुक्तः, तस्य नियतदेशकालप्रमातृगतत्वात् । संदेहोऽपि पर्यव-

यत्र तु कस्यचित्परिग्रहे साधकं बाधकं वा प्रमाणं विद्यते, तत्र नियतपरिग्रहः । तत्रानुकूल्यं साधकम्, प्रातिकूल्यं बाधकम् । तत्र साधकं यथा—

'प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने ।
नमोऽनन्तप्रकाशाय शंकरक्षीरसिन्धवे ॥'

अत्र शंकर एव क्षीरसिन्धुरिति रूपकस्यामृतमयत्वं साधकम् । तस्य शंकरापेक्षया क्षीरसिन्धावनुकूलत्वात् । उपमायास्तु न बाधकम् ।

---

सानेऽवश्यमेकतरपक्षाश्रयणम्, उत्तरकालं बाधकप्रत्ययोल्लासात् । इह च संदेहेऽप्युत्तरकालं यद्येकतरालंकाराश्रयणं तत्स एवालंकारः स्यात्, तस्यैव वाक्यार्थत्वेन प्ररोहात् । वाक्यार्थीभाव एव ह्यलंकाराणां स्वरूपप्रतिष्ठापकं प्रमाणम् । न चोभयोरपि वाक्यार्थीभावो, विप्रतिषेधात् । संदिग्धश्च वाक्यार्थो दोष इत्यविवादः । न च लक्ष्येऽपि तथाभावः, तथा ह्याद्योदाहरणे विभावनाया एव निश्चयः । विरुद्धमुखेनोत्कण्ठाकारणाभावेऽपि प्रतिपन्ने तथापि 'चेतः समुत्कण्ठते' इत्युत्कण्ठोदयस्यैव कार्यस्य वाक्यार्थत्वेन प्ररोहात् । अत एवानुत्कण्ठोत्पत्तिरविवक्षितेति विशेषोक्तेर्बाध इति विभावनाया एव वाक्यार्थीभावः । उत्तरोदाहरणे रूपकस्यैव निश्चयः । यतोऽत्रान्यप्रयोजनयोर्द्वयोः समासयोरेकत्र युगपत्प्राप्तेस्तुल्यबलत्वाद्विप्रतिषेधः । ततश्च 'विप्रतिषेधे परं कार्यम्' इति परत्वाद्रूपकसमासप्रवृत्तिः । एतदेव रूपकस्य साधनं प्रमाणम् । अत एवात्र यदन्यैः 'अबाधेन गतौ संभवन्त्यां बाधगतिरप्रामाणिकी' इति न्यायाल्लक्षणात्मकरूपकसमासबाधकतयाश्रयात्मन उपमासमासस्य प्रवृत्तिरित्युपमायाः साधकप्रमाणसद्भावोऽस्तीत्युक्तम् । तदयुक्तम् । भवन्मते च समासां प्रायशो लक्षणपरत्वादुपमासमासस्यापि लक्षणात्मकत्वमित्यबाधेन गतेरसंभवादुपमाया अपि नास्ति बाधकप्रमाणसद्भावः । अथोपमायां लक्षणा, रूपके तु लक्षितलक्षणेति न द्वयोः पक्षयोस्तुल्यत्वमिति चेत्, नैतत् । एवमप्यबाधेन गतेरसंभवस्य तादवस्थ्यात् । अयं हि बाधगतेरेव प्रतीयते, तत्र तत्समास एव कार्य इत्याह—**यत्र त्वित्यादि** । एतदेव दर्शयति—**तत्रेत्यादिना । न बाधकमिति** । न पुनः साधकमपीत्यर्थः । बाधकत्वाभावमात्रेण

शंकरेऽपि तस्योपचरितस्य संभवात् । यथा वा—

'एतान्यवन्तीश्वरपारिजातजातानि तारापतिपाण्डुराणि ।
संप्रत्यहं पश्यत दिग्वधूनां यशःप्रसूनान्यवतंसयामि ॥'

अत्रावतंसनं प्रसूनेष्वनुगुणमिति रूपकपरिग्रहेण साधकं प्रमाणम् ॥ बाधकं यथा—

'शरदीव प्रसर्पन्त्यां तस्य कोदण्डटंकृतौ ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥'

अत्र विन्ध्य उदधिरिवेत्युपमापरिग्रहे विनिद्रजृम्भितहरिरिति साधारणं विशेषणं बाधकं प्रमाणम् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति वचनादुपमासमासे प्रतिकूलत्वात् । अतश्च पारिशेष्याद्रूपकपरिग्रहः । न तु शरदीवेत्युपमात्रोपमासाधकत्वेन विज्ञेया । न ह्यौपम्येन कदाचिदर्थसिद्धिः । न ह्यौपम्येलंकारेणोपक्रान्तेन निर्वाहः कर्तव्य इति राजाज्ञैषा । नापि धर्मसूत्रकारवचनम् । नाप्येष न्यायः । उत्तरोत्तरसाम्यप्रकर्षविवक्षणे प्रक्रान्तोपमापरित्यागेन रूपकनिर्वाहस्योचितत्वात् । विपर्ययस्तु दुष्ट एव । यथा—'येनेन्दुर्दहनं विषं मल-

---

साधकत्वानुपपत्तेः । तथात्वे ह्यत्रापि संदेहसंकरः स्यादिति भावः । **यथा वेति** । पूर्वत्र संकरेऽप्युपचरितस्यामृतमयत्वस्य संभवात्संदेहभ्रमः कस्यचित्स्यादित्यस्योदाहरणस्य पुनरुपादानम् । **साधारणमिति** । सामान्यप्रयोगे हि विन्ध्य उदधिरेवेत्यसमास एव स्यात् । यथा—पुरुषोऽयं व्याघ्र इव शूर इति । **अतश्चेति** । उपमाया बाधकप्रमाणसंभवादप्रवृत्तेः । **पारिशेष्यादिति** । न पुनः साधकप्रमाणसंभवादित्यर्थः । **उचितत्वादिति** । रूपकनिर्वाहेण साम्यस्याधिक्येन प्रवृत्तिः । **विपर्यय इति** । रूपकोपक्रमेणोपमानिर्वाहो दुष्ट इति साम्यलाघवेन प्रतीतेः । 'स्वेच्छाचारिणि यत्पुरा प्रियसखीवाचस्त्वया नादृता यत्कल्याणपराङ्मुखि प्रियतमः पादानतो नेक्षितः । तस्येदं हरिणाक्षि दुर्नयतरोरद्यापि

यजं हारः कुठारायते ।' इति । तस्मात्प्रकृते सामान्यप्रयोगे उपमापरिग्रहे बाधक इति मयूरव्यंसकादेराकृतिगणत्वाद्रूपकसमाश्रयेण रूपकमेव बोद्धव्यम् । एवं 'भाष्याब्धिः क्वातिगम्भीरः' इत्यादौ द्रष्टव्यम् । साधकबाधकाभावे तु संदेहसंकरः । यथोदाहृतम् ।

तृतीयस्तु प्रकार एकवाचकानुप्रवेशलक्षणः । यत्रैकस्मिन्वाचकेऽने-कालंकारानुप्रवेशः, न च संदेहः । यथा—

'मुरारिनिर्गता नूनं नरकप्रतिपन्थिनी ।
तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥'

अत्र मुरारिनिर्गतेति साधारणविशेषणहेतुका उपमा, नरकप्रतिप-न्थिनीति श्लिष्टविशेषणसमुत्थश्चोपमाप्रतिभोत्पत्तिहेतुः श्लेषश्चैकस्मिन्नेव-शब्देऽनुप्रविष्टौ, तस्योभयोपकारित्वात् । अत्र यथार्थश्लेषेण सहोप-मायाः संकरस्तथा शब्दश्लेषेणापि सह दृश्यते । यथा—

---

बालं फलम् ॥' इति चास्य पादत्रयी । एवं चाधिकप्रकर्षालंकारोपक्रमेण तत्प्र-कर्षालंकारैर्निर्वाहो न कार्य इत्यप्यनेन सर्वालंकारशेषत्वेनोक्तम् । **प्रकृत इति ।** शरदीवेत्यादौ । **द्रष्टव्यमिति ।** उपमाया बाधकत्वं प्रति गम्भीरत्वस्य सामा-न्यस्य हि प्रयोगे उपमासमासे बाधक इति रूपकपरिग्रह एव युक्तः । **उदाहृत-मिति ।** 'यः कौमारहरः' इत्यादिना । **न च संदेह इति ।** संदेहसत्कारे यद्यप्येकवाचकत्वमस्ति, तथापि तत्र संदिह्यमानत्वेन चमत्कारोऽस्तीति ततोऽस्य वैलक्षण्यम् । इह ह्येकानुप्रविष्टयोरलंकारयोर्निश्चितत्वेन निबन्धनम् । एकवाच-कानुप्रविष्टत्वेन चालंकारयोः संसृष्टत्वेन चारुतातिशयोपजन इति नैवैकहेतुकत्वेन संकरोपमयोरिवेत्युक्त्या नास्याभावो वाच्यः । न हि यमकयोः संसृष्टत्वेनैवाव-भासोऽस्तीति यथोक्तमेव युक्तम् । **अर्थश्लेषेणेति ।** नरकशब्दस्य दानवनिरया-र्थकत्वात् । द्योतितरङ्गेति शब्दस्य सभङ्गत्वाच्छब्दश्लेषः । न चास्योदाहरणद्वय-मेतद्युक्तम् । उपमाप्रतिभोत्पत्तिहेतुकस्य श्लेषस्यैवात्रालंकारत्वात् । उपमा हि श्लेषस्य हेतुत्वेनैव गता । तां विना तस्या अनुत्थानात् । अतश्च श्लेष एवात्र

---

१. पाणिनितन्त्रविरुद्धोऽप्य प्रयोगः कविसंप्रदायसिद्धः ।

'सत्पूरुषद्योतितरङ्गशोभिन्यमन्दमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥'

अत्र 'पयसीव नाट्यगृहे रमन्ते' इत्येतावतैव समुचितोपमा निष्पन्ना सत्पूरुषद्योतितरङ्ग इति शब्दश्लेषेण सहैकस्मिन्नेव शब्दे सङ्कीर्णा । शब्दालंकारयोः पुनरेकवाचकानुप्रवेशेन संकरः पूर्वमुदाहृतो 'राजति तटीयम्' इत्यादिना । एकवाचकानुप्रवेशेनैव चात्र संकीर्णत्वम् ।

अत एव व्यवस्थितत्वमन्यानुभाषितमप्रयोजनकम् । तुल्यजातीययोरप्यलंकारयोरेकवाचकानुप्रवेशसंभवात् । शब्दार्थवर्त्यलंकारसंक-

---

प्राधान्येनालंकारः । एवं न संकरः, एकस्यैवात्रालंकारस्य स्थितेः । तस्य च द्विप्रभृतीनां संसृष्टतायामुक्तत्वात् । उदाहरणान्तरं यथा—'अङ्के न्यस्योत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हर्तुः कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम् । बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णः कोणेनैवेक्षमाणस्त्वदनुजवदने दत्तकर्णोऽयमास्ते ॥' अत्रेदृगीश्वराणां स्वभाव इति स्वभावोक्तिः, दाशरथेश्च प्रत्यक्षायमाणत्वमिति भाविकमित्येकस्मिन्नेव वाचकेऽलंकारद्वयमनुप्रविष्टमित्ययं संकरः । अत्र च भाविकस्वभावोक्त्योरुपकार्योपकारकभावेनाङ्गाङ्गित्वेऽप्येकवाचकानुप्रवेशकृतो वैचित्र्यातिशयः प्रधानतया प्रतीयत इत्येतदुदाहरणत्वम् । अङ्गाङ्गिभावश्च भिन्नवाचकालंकारगतत्वेन लब्धावकाशोऽस्ति । अतो 'राजति तटीयम्' इत्यादावेकवाचकानुप्रवेशोऽपि निरवकाश इति ततोऽस्य पृथग्भावः । **अत एवेति** । शब्दालंकारयोरेकवाचकानुप्रवेशात् । **अन्येति** । अन्यैः काव्यप्रकाशकारादिभिः । यदुक्तम्—'स्फुटमेकत्र विषयं शब्दार्थालंकृतिद्वयम् । व्यवस्थितं च' इति । **अप्रयोजनकमिति** । तथानुभाषणं पुनर्न कश्चिद्दोष इति भावः । मुरारिनिर्गतेत्यादौ ह्यर्थालंकारत्वात्सजातीययोरुपमाश्लेषयोः पूर्वोक्तनीत्या भिन्नविषयत्वेनास्यैकवाचकानुप्रवेशोऽस्तीत्यर्थः । एवं शब्दाश्रयत्वादर्थाश्रयत्वाच्च तुल्यजातीयानामलंकाराणामङ्गाङ्गिभावादिना संकर उक्तः । शब्दार्थवर्तिनामलंकाराणां पुनः संसर्गेणायमलंकार इत्याह—**शब्दार्थेत्यादि** । न केवलं काव्य-

रस्तु भट्टोद्भटप्रकाशितः संसृष्टावन्तर्भावित इति त्रिप्रकार एव संकर इह प्रदर्शितः । इदानीमुपसंहारसूत्रम्—

**एवमेते शब्दार्थोभयालंकाराः संक्षेपतः सूत्रिताः ।**

एवमिति पूर्वोक्तप्रकारपरामर्शः । एते इति प्रक्रान्तस्वरूपनिर्देशः । सूत्रिता अलंकारसूत्रैः सूचिताः संक्षेपतः प्रकाशिताः ।

तत्र शब्दालंकारा यमकादयः । अर्थालंकारा उपमादयः । उभयालंकारा लाटानुप्रासादयः । संसृष्टिसंकरप्रकारयोरपि कयोश्चित्तद्रूपत्वात् । लोकवदाश्रयाश्रयिभावश्च तत्तदलंकारनिबन्धनम् । अन्वयव्यतिरेकौ तु तत्कार्यत्वे प्रयोजकौ । न तदलंकारत्वे । तदलंकारप्रयो-

---

प्रकाशकारेण शब्दार्थवर्तिनोरलंकारयोः संकर उक्तो यावदनेनापीति भावः । तदुक्तम्—'शब्दार्थवर्त्यलंकारवाक्य एकत्र भासिनः । संकरः ।' इति । **संसृष्टाविति** । अनयोर्ह्याश्रयभेदात्तिलतण्डुलन्यायेन स्पष्ट एव भेदावगम इत्यत्रैवान्तर्भावो युक्तः । **त्रिप्रकार इति** । अङ्गाङ्गिभावसंशयैकवाचकानुप्रवेशेन । यदुक्तम्—'तेनासौ त्रिरूपः परिकीर्तितः' इति । एवं संदेहसंकरस्यानुपपत्तावपि चिरंतनोक्तत्वादेवास्य ग्रन्थकृता त्रिप्रकारत्वमेवोक्तम् ॥ अधुनैतेषामलंकाराणामुपसंहारं कर्तुमुपक्रमते—**इदानीमित्यादिना** । प्राप्तावसरेति । यथातत्त्वं सर्वेषामलंकाराणां निर्णीतत्वात् । तदेवाह—**एवमित्यादि** । एतदेव व्याचष्टे—**एवमित्यादिना** । संक्षेपेणेति । ग्रन्थस्य । न पुनरर्थस्य । तस्य हि तथात्वकथने तेषां स्वरूपमेव कथितं न स्यात् । एवं ग्रन्थसंक्षेपेणापि सर्वेषामलंकाराणां विस्तरत एव यथासंभवि स्वरूपमुक्तमिति प्राच्यालंकारग्रन्थेभ्योऽस्य वैलक्षण्यमपि ध्वनितम् । तत्र ग्रन्थविस्तरेणाप्येतत्स्वरूपस्यानभिधानात् । अत एव ग्रन्थकारेण प्रयोजनमपि द्योतितम् । के ते शब्दार्थोभयालंकारा इत्याशङ्क्याह—**तत्रेत्यादि** । आदिग्रहणादनुप्रासानन्वयश्लेषादीनां ग्रहणम् । ननु च लाटानुप्रासश्लेषयोरेवोभयालंकारत्वे पूर्वमुक्त्वा उभयालंकारा इति बहुवचननिर्देशः कथं संगच्छते इत्याशङ्क्याह—**संसृष्टीत्यादि** । तत्र संसृष्टेरुभयालंकारत्वं यथा—'आनन्दमन्थर—' इत्यादि । संकरस्य यथा—'मैवमेवास्वसच्छायकर्णिकाचारुवर्णिता । अम्भोजिनीव चित्रस्था नेत्रमात्रसुखप्रदा ॥' अत्र शब्दार्थालंकारसंसर्गादुभयालंकारत्वम् । संक-

जकत्वे तु श्रौतोपमादेरपि शब्दालंकारत्वप्रसङ्गात् । तस्मादाश्रयाश्रयिभावेनैव चिरंतनमतानुसृतिरिति भद्रम् ।

संपूर्णमिदमलंकारसर्वस्वम् ।

---

रस्य चैतदुभयालंकारत्वमौद्भटमत एवावसेयम् । ग्रन्थकृता ह्यस्य समनन्तरमेव संसृष्टावन्तर्भाव उक्तः । अतश्च ग्रन्थकृन्मते लाटानुप्राससंसृष्टिः । श्लेषाणामेवोभयालंकारत्वम् । ननु तुल्यत्वेऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलंकारः शब्दस्य कश्चिदर्थस्य कश्चिदुभयस्येति कुतः पुनरयं प्रतिनियम इत्याशङ्क्याह—लोकवदित्यादि । लोके हि योऽलंकारो यदाश्रितः स तदलंकारतयोच्यते, यथा कुण्डलादिः कर्णाद्याश्रितस्तदलंकारः । एवमिहापि शब्दाद्याश्रितस्तदलंकार इति सिद्ध एव विषयविभागरूपः प्रतिनियमः । यत्त्वन्यैरन्वयव्यतिरेकौ तदलंकारनिबन्धनत्वेनोक्तौ तदयुक्तमेवेत्याह—अन्वयेत्यादि । एवं हि श्रौतोपमायामिवादिशब्दान्वयव्यतिरेकानुवर्तनात्तत्कार्यमेव न पुनस्तदलंकारत्वम् । तस्याविशेषात् । अर्थस्य पुनरलंकृतत्वात्तदलंकारत्वमेव युक्तमिति तात्पर्यार्थः । एतच्चोद्भटविवेके राजानकतिलकेन सप्रपञ्चमुक्तमिति ग्रन्थविस्तरभयान्नेहास्माभिः प्रपञ्चितम् । एतदेवोपसंहरति—**तस्मादित्यादि । आश्रयाश्रयिभावेनेति ।** उपस्कार्योपस्कारकभावेनेत्यर्थः । तेन योऽलंकारो यदुपस्कारः स तदलंकार इति पिण्डार्थः । **चिरंतनेति ।** अनेनास्माभिः सर्वत्रैव तन्मतानुसृतिरेव कृतेत्यात्मविषयमनौद्धत्यमपि ग्रन्थकृता प्रकाशितमिति शिवम् ॥

राजराज इति भूभुजामभूदग्रणीर्गुणिगणाश्रयः परम् ।
तां सतीसरसि राजहंसतामातनोत्किल घनागमेऽपि यः ॥
शक्राधिकश्रियस्तस्य श्रीशृङ्गार इति श्रुतः ।
गुणातिक्रान्तधिषणो मन्त्रिणामग्रणीरभूत् ॥
तदात्मजन्मा वैदग्ध्यबन्धुर्जयरथाभिधः ।
व्यधादिदमसामान्यं श्रवणाभरणं सताम् ॥
यन्नाम किंचिदिह सम्यगथान्यथा वा साक्षादलंकृतिनयोचितमेतदुक्तम् ।
विद्वेषरोषमपसार्य बुधैः क्षणस्य तत्रावधेयमियतैव वयं कृतार्थाः ॥

इति श्रीजयरथविरचितालंकारविमर्शिनी संपूर्णा ॥

---

# अलंकारसर्वस्वस्योदाहरणश्लोकानामनुक्रमणिका ।


| | पृ० |
|---|---|
| **अ.** | |
| अक्ष्णोः स्फुटाश्रु ... ... | २३७ |
| [1]अङ्गलेखाम ... ... | १५९ |
| [2]अङ्गुलीभिरिव ... ... | २४८ |
| अण्णं लडह ... ... | ८५ |
| अतिशयित ... ... | ४१ |
| [3]अत्रानुगोदं ... ... | ४१ |
| अथ पक्ष्मिमता ... ... | ५३ |
| [4]अथोपगूढे ... ... | ११८ |
| [5]अनन्तरत्न ... ... | १४० |
| अनन्यसामान्य ... ... | ७६ |
| [6]अनातपत्रो ... ... | २२९ |
| [7]अन्तश्छिद्राणि ... ... | १३८ |
| अपाङ्गतरले ... ... | २११ |
| [8]अब्धिर्लङ्घित ... ... | ९६ |
| [9]अमुष्मिंल्लावण्या ... ... | ६६ |
| अयं मार्तण्डः किं ... ... | ५४ |
| [10]अयं वारामेको ... ... | १५५ |
| [11]अयमेकपदे ... ... | २०१ |
| अरण्यरुदितं ... ... | १०० |
| [12]अरण्यानी ... ... | १६६ |
| अलंकारःशङ्का ... ... | १९८ |
| [13]अविरल ... ... | ८८ |
| [14]अव्यात्सवो ... ... | ९८ |
| [15]असमाप्त ... ... | ११८ |
| [16]असंभृतं ... ... | १५८ |
| [17]अस्याः सर्ग ... ... | ८६ |
| अहमेव गुरुः ... ... | २१० |
| [18]अहीनभुजगा ... ... | २३ |
| अहो केनेदृशी ... ... | २२१ |
| अहो हि मे ... ... | १४१ |
| **आ.** | |
| आकृष्टिवेग ... ... | ११९ |
| [19]आकृष्यादाव ... ... | १३१ |


१. उद्भटस्य प्रतीहारेन्दुराजवृत्तौ । २. कालिदासस्य कुमारसंभवे । ३. रघुवंशे । ४. पाणिनेर्जाम्बवतीविजये । ५. कालिदासस्य कुमारसंभवे । ६. पद्मगुप्तस्य नवसाहसाङ्कचरिते । ७. भल्लटशतके । ८. मुरारेः स्तुतिपरं मुक्तकम् । ९. सुभाषितावलौ रामस्य । १०. भल्लटशतके । ११. विक्रमोर्वशीयाम् । १२. नवसाहसाङ्कचरिते । १३. रुद्रटस्य काव्यालंकारे । १४. नवसाहसाङ्कचरिते । १५. कल्हणस्य राजतरङ्गिण्याम् । १६. कालिदासस्य कुमारसंभवे । १७. विक्रमोर्वशीयाम् । १८. रुय्यकस्य श्रीकण्ठस्तवे । १९. सुभाषितावलौ ।

| | पृ० |
|---|---|
| [1]आटोपेन ... ... | २५ |
| [2]आनन्दमन्थर ... ... | २४७ |
| आभाति ते ... ... | ४७ |
| आ मुण्डशिरसि ... ... | १०० |
| [3]आरोपयसि ... ... | २२२ |
| [4]आहूतोऽपि ... ... | १६१ |
| **इ.** | |
| [5]इति कृतपशु ... ... | २२२ |
| इन्दुः किं क्व ... ... | ५४ |
| [6]इन्दुर्लिप्त ... ... | १३४ |
| इन्दोर्लक्ष्म ... ... | १४३ |
| **उ.** | |
| उत्कोपे त्वयि ... ... | १०१ |
| उत्क्षिप्तं सह ... ... | १०५ |
| उद्भ्रान्तोज्झित ... ... | ६५ |
| उन्नत्यै नमति ... ... | १६९ |
| [7]उपोढरागेण ... ... | १०९ |
| [8]उरो दत्त्वा ... ... | १९२ |
| **ए.** | |
| ए एहि दाव ... ... | २०८ |
| [9]एकस्मिञ्शयने ... ... | २४० |
| [10]एकाकिनी ... ... | २१६ |
| [11]एतत्तस्य ... ... | १३३ |
| [12]एतान्यवन्ती ... ... | २५३ |
| [13]एषा स्थली ... ... | ७४ |
| **ऐ.** | |
| [14]ऐन्द्रं धनुः ... ... | ११७ |
| **ओ.** | |
| ओष्ठे बिम्बफल ... ... | ५७ |
| **क.** | |
| [15]कज्जलहिम ... ... | १८८ |
| [16]कण्ठस्य तस्याः ... ... | १७१ |
| [17]कपोलफलका ... ... | ७५ |
| [18]कमलमनम्भसि ... ... | ८४ |
| [19]कर्पूर इव ... ... | १६१ |
| कस्तूरीतिलक ... ... | ७६ |
| [20]कस्त्वं भो ... ... | १३७ |
| का विसमा ... ... | २१७ |
| [21]काशाः काशाः ... ... | २९ |
| [22]कार्यं शश ... ... | २४० |


१. मङ्खकवेः श्रीकण्ठचरितकाव्ये। २. पञ्चस्तव्याम्। ३. सुभाषितावलौ मयूरस्य। ४. मालवरुद्रस्य। ५. सुभाषितावलौ मयूरस्य। ६. राजशेखरस्य बालरामायणे। ७. पाणिनेः। ८. प्रतीहारेन्दुराजवृत्तौ। ९. अमरुशतके। १०. ध्वन्यालोके। ११. भल्लटशतके। १२. नवसाहसाङ्कचरिते। १३. रघुवंशे। १४. पाणिनेः। १५. रुद्रटस्य काव्यालंकारे। १६. कुमारसंभवे। १७. प्रतीहारेन्दुराजवृत्तौ। १८. सुभाषितावलौ शंकरगणस्य। १९. बालरामायणे। २०. ध्वन्यालोके। २१. प्रतीहारेन्दुराजवृत्तौ। २२. विक्रमोर्वश्याम्।

| | | पृ० |
|---|---|---|
| [1]क्षीणः क्षीणोऽपि शशी | ... | १०२ |
| किमासेव्यं | ... ... | १९३ |
| [2]किमित्यपास्या | ... ... | १९२ |
| किवणाण | ... ... | ९३ |
| [3]किं तारुण्यतरो | ... ... | ५४ |
| किं नाम दर्दुर | ... ... | २४ |
| किं पद्मस्य रुचिं | ... ... | ४७ |
| [4]किं भूषणं | ... ... | १९३ |
| [5]किं मे दुरोदरे | ... ... | २२२ |
| [6]किं वृत्तान्तैः | ... ... | १४४ |
| किं हास्येन न | ... ... | २३४ |
| कुबेरजुष्टां | ... ... | ७५ |
| कुलममलिनं | ... ... | २०३ |
| क्रेङ्कारो नख | ... ... | २२३ |
| [7]कौटिल्यं कच | ... ... | १९४ |
| **ख.** | | |
| खमिव जलं | ... ... | ४० |
| [8]गच्छ गच्छसि | ... ... | १५३ |
| **ग.** | | |
| गणिकासु | ... ... | १५१ |
| गण्डान्ते मद | ... ... | ११५ |
| [9]गतासु तीरं | ... ... | ७७ |
| [10]गर्वमसंवाह्य | ... ... | २०९ |
| गाङ्गमम्बु | ... ... | २१५ |
| [11]गाढालिङ्गन | ... ... | २३७ |
| गुरुपरतन्त्र | ... ... | २२० |
| [12]गृह्णन्तु सर्वे | ... ... | १५० |
| **घ.** | | |
| घेत्तुं मुच्चइ | ... ... | १६८ |
| **च.** | | |
| [13]चकोर्य एव | ... ... | ९५ |
| [14]चक्राभिघात | ... ... | १३५ |
| [15]चन्द्रग्रहणेन | ... ... | २२२ |
| चित्रं चित्रं | ... ... | १६७ |
| चूडामणिपदे | ... ... | ९७ |
| [16]चोलस्य यद्भीति | ... ... | ७६ |
| **ज.** | | |
| [17]जये धरित्र्याः | ... ... | १८० |


१. रुद्रटस्य काव्यालंकारे । २. कुमारसंभवे । ३. सुभाषितावलौ बन्धोः । ४. बकस्य । ५. मयूरस्य । ६. ध्वन्यालोकलोचने । ७. रुद्रटस्य काव्यालंकारे । ८. दण्डिनः काव्यादर्शे । ९. नवसाहसाङ्कचरिते । १०. रुद्रटस्यकाव्यालंकारे । ११. अमरुशतके । १२. विक्रमाङ्कदेवचरिते । १३. राजशेखरस्य बालरामायणे । १४. ध्वन्यालोके । १५. सुभाषितावलौ मयूरस्य । १६. विक्रमाङ्कदेवचरिते । १७. वराहमिहिरस्य बृहत्संहितायाम् ।

| | पृ० |
|---|---|
| जितेन्द्रियत्वं ... ... | १७७ |
| ज्योत्स्नातमः ... ... | १४७ |
| ज्योत्स्नाभस्म ... ... | ६६ |
| **ण.** | |
| णाराअणोत्ति ... ... | ६१ |
| तण्णत्थि किंपि ... ... | १३३ |
| [1]तदिदमरण्यं ... ... | २३१ |
| तन्वी मनोरमा ... ... | १०९ |
| तस्य च प्रवयसो ... ... | १९२ |
| [2]त्वं हालाहल ... ... | २२१ |
| [3]त्वत्पादनख ... ... | ९८ |
| [4]त्वदङ्गमार्दवं ... ... | ९० |
| त्वद्वक्त्रामृत ... ... | २३७ |
| [5]त्वमेवं सौन्दर्या ... ... | १६७ |
| [6]ताला जाअन्ति ... ... | २८ |
| तीर्थान्तरेषु ... ... | १६६ |
| [7]तीर्त्वा भूतेश ... ... | ५१ |
| त्रयीमयोऽपि ... ... | १२७ |
| **द.** | |
| [8]दत्वा दर्शन ... ... | १९३ |
| [9]दन्तप्रभा ... ... | ११० |
| दामोदरकरा ... ... | ५८ |
| दारुणः काष्ठतो ... ... | २३ |
| दासे कृता ... ... | ४५ |
| [10]दाहोऽम्भः ... ... | ८७ |
| दिदृक्षवः ... ... | १०२ |
| [11]दिव्यमप्युप ... ... | १७२ |
| [12]दुर्वाराः स्मर ... ... | २०३ |
| [13]दूराकर्षण ... ... | २३७ |
| [14]दृशा दग्धं ... ... | १७४ |
| [15]देया शिलापट्ट ... ... | १५० |
| देवि क्षपा ... ... | २४५ |
| [16]दोर्दण्डाञ्चित ... ... | १७० |
| [17]द्यांमालिलिङ्ग ... ... | ११४ |
| द्युजनो मृत्युना ... ... | १०५ |
| द्यौरत्र क्वचि ... ... | १६९ |
| **ध.** | |
| [18]धवलोऽसि ... ... | २१५ |
| धन्याः खलु ... ... | १३७ |


१. रुद्रटस्य काव्यालंकारे । २. वक्रोक्तिपञ्चाशिकायाम् । ३. विक्रमाङ्कदेवचरिते । ४. प्रतीहारेन्दुराजवृत्तौ । ५. वामनस्य काव्यालंकारसूत्रवृत्तौ । ६. आनन्दवर्धनस्य विषमबाणलीलायाम् । ७. मुरारेरनर्घराघवे । ८. रुद्रटस्य काव्यालंकारे । ९. प्रतीहारेन्दुराजवृत्तौ । १०. विद्धशालभञ्जिकायाम् । ११. रुद्रटस्य काव्यालंकारे । १२. शार्ङ्गधरपद्धतौ भट्टशङ्कुकस्य । १३. ध्वन्यालोकलोचने । १४. राजशेखरस्यविद्धशालभञ्जिकायाम् । १५. विक्रमाङ्कदेवचरिते । १६. महावीरचरिते । १७. मङ्खस्य श्रीकण्ठचरिते । १८. गाथासप्तशत्याम् ।

| | | | | |
|---|---|---|---|---|
| | पृ० | | | पृ० |
| धावत्त्वदश्व ... ... | ९० | | पश्यामः किमियं ... ... | १३४ |
| धृतधनुषि ... ... | १९७ | | [7]पाँण्ड्योऽयमंसा ... ... | ३४ |
| न. | | | [8]पातालमेत ... ... | ७४ |
| [1]न तज्जलं ... ... | १७८ | | पीयूषप्रसृति ... ... | ४६ |
| [2]नन्वाश्रय ... ... | १९० | | [9]पृथ्वि स्थिरा ... ... | १४० |
| निमेषमपि ... ... | १७२ | | [10]पुराणि यस्यां ... ... | १७८ |
| [3]निरर्थकं ... ... | १०७ | | [11]पुष्पं प्रवालोप ... ... | ८६ |
| [4]निरीक्ष्य विद्यु ... ... | १११ | | पूर्णेन्दोः परि ... ... | ६४ |
| निर्लूनान्य ... ... | ११४ | | [12]प्रभामहत्या ... ... | ३३ |
| निशासु भास्व ... ... | १९१ | | प्रसरद्बिन्दु ... ... | २५२ |
| नीतानामा ... ... | १२२ | | प्रसर्पत्तात्पर्यैः ... ... | ११५ |
| नेत्रैरिवोत्पलैः ... ... | ११८ | | प्रसीदेति ... ... | १४७ |
| नो किंचित्कथ ... ... | १५३ | | प्राप्याभिषेक ... ... | ८० |
| न्यञ्चत् कुञ्चित ... ... | २०१ | | प्रायः पथ्यप ... ... | १६४ |
| प. | | | [13]प्रासादे सा ... ... | १७२ |
| पथि पथि ... ... | १६३ | | ब. | |
| परहिअअं ... ... | १६६ | | [14]बाणेन हत्वा ... ... | १५० |
| [5]परिच्छेदातीतः ... ... | १५५ | | बालअ णाहं ... ... | १४७ |
| पर्यङ्को राज ... ... | ४८ | | बिभ्राणा हृदये ... ... | २०१ |
| [6]पशुपतिरपि ... ... | १९७ | | ब्रूमः कियन्नय ... ... | २८ |
| पश्यत्सूद्गत ... ... | १६३ | | भ. | |
| पश्यन्ती त्रपयेव ... ... | ११६ | | [15]भक्तिप्रह्वविलो ... ... | १९९ |
| | | | भक्तिर्भवे ... ... | १९४ |


१. भट्टिकाव्ये । २. भल्लटशतके । ३. विक्रमाङ्कदेवचरिते । ४. पाणिनेः । ५. भवभूतेर्मालतीमाधवे । ६. कुमारसंभवे । ७. रघुवंशे । ८. नवसाहसाङ्कचरिते । ९. बालरामायणे । १०. नवसाहसाङ्कचरिते । ११. कुमारसंभवे । १२. कुमारसंभवे । १३. अमरुशतके । १४. विक्रमाङ्कदेवचरिते । १५. सुभाषितावलौ भागवतामृतवर्धनस्य ।

| | पृ० |
|---|---|
| भासते प्रतिभा ... ... | ३० |
| [1]भुजंगकुण्डली ... ... | २३ |
| [2]भ्रमिमरति ... ... | ५० |
| **म.** | |
| मग्गिअलद्धम्मि ... ... | ८५ |
| [3]मदनगणना ... ... | १११ |
| [4]मनीषिताः ... ... | १८३ |
| मन्दमग्नि ... ... | ११५ |
| [5]मलयजरजस ... ... | २१३ |
| [6]महिलासहस्स ... ... | ७६ |
| [7]मानमस्या ... ... | २०५ |
| मुक्ताः केलि ... ... | २३० |
| मुण्डसिरे ... ... | १०० |
| [8]मुनिर्जयति ... ... | २२८ |
| [9]मुरारिनिर्गता ... ... | २५४ |
| मृगलोचनया ... ... | १०७ |
| [10]मृगयश्च दर्भा ... ... | १८२ |
| [11]यः कौमारहरः ... ... | १६१ |
| [12]यत्त्वन्नेत्रसमान ... ... | १८२ |
| यत्रैता लहरी ... ... | १८५ |
| यत्रैव मुग्धेति ... ... | १९१ |
| यथारन्ध्रं ... ... | १८४ |
| यदि नेच्छसि ... ... | २२२ |
| [13]यदेतच्चन्द्रा ... ... | ६४ |
| यद्वक्रचन्द्रे ... ... | २५१ |
| [14]यद्वा मृषा ... ... | १५१ |
| यद्विस्मयस्ति ... ... | १८३ |
| [15]यस्य किंचिद् ... ... | २०७ |
| [16]यान्त्या मुहुर्व ... ... | ३३ |
| यामि मनोवा ... ... | ४८ |
| युद्धेऽर्जुनो ... ... | ३८ |
| ये कन्दरासु ... ... | २१२ |
| [17]येन ध्वस्तमनो ... ... | १२२ |
| [18]येन लम्बालकः ... ... | १३४ |
| यैरेकरूप ... ... | ११४ |
| यैर्दृष्टोऽसि ... ... | ४२ |
| [19]योगपट्टो ... ... | ९० |
| यो यः पश्यति ... ... | २६ |
| **र.** | |
| [20]रञ्जिता नु ... ... | ५५ |

१. रुय्यकस्य श्रीकण्ठस्तवे । २. ध्वन्यालोके । ३. मङ्खस्य श्रीकण्ठचरिते । ४. कुमारसंभवे । ५. वामनस्य काव्यालंकारसूत्रवृत्तौ । ६. गाथासप्तशत्याम् । ७. दण्डिनः काव्यादर्शे । ८. ध्वन्यालोके । ९. प्रतीहारेन्दुराजवृत्तौ । १०. कुमारसंभवे । ११. शीलाभट्टारिकायाः । १२. सुवृत्ततिलके कान्यकुब्जाधिपतेर्यशोवर्मणः । १३. सुभाषितावलौ श्रीहर्षचौरयोः । १४. विक्रमाङ्कदेवचरिते । १५. शिशुपालवधे । १६. भवभूतेर्मालतीमाधवे । १७. सुभाषितावलौ चन्द्रकस्य । १८. प्रतीहारेन्दुराजवृत्तौ । १९. प्रतीहारेन्दुराजवृत्तौ । २०. किरातार्जुनीये ।

| | पृ० |
|---|---|
| रक्तच्छदत्वं ... ... | १२३ |
| [1]रथस्थितानां ... ... | ८१ |
| [2]राजति तटीय ... ... | २५० |
| राजन्राजसुता ... ... | १३६ |
| [3]राज्ञो मान ... ... | १२० |
| [4]राज्ये सारं ... ... | १८० |
| रेहइ मिहि ... ... | ९२ |
| **ल.** | |
| [5]लावण्यद्रविण ... ... | ८६ |
| [6]लावण्यौकसि ... ... | १८८, २०८ |
| [7]लिम्पतीव तमो ... ... | २४५, ७४ |
| लोकोत्तरं ... ... | १४० |
| **व.** | |
| वक्रस्यन्दि ... ... | २१८ |
| [9]वदनसौरभ ... ... | २४४ |
| [10]वसुरहितेन ... ... | २२२ |
| वामेन नारी ... ... | २४० |
| [11]विजये कुशल ... ... | २२२ |
| [12]विदलितसकला ... ... | २०१ |
| विद्वन्मानस ... ... | ४७ |
| [13]विनयेन विना ... ... | १०६ |
| [14]विभिन्नवर्णा ... ... | २१४ |
| वियोगे गौड ... ... | १०० |
| [15]विलङ्घयन्ति ... ... | १९४ |
| विलसदमर ... ... | ६५ |
| विलिखति ... ... | ११३ |
| [16]विसृष्टरागा ... ... | १९० |
| विस्तारशालिनि ... ... | ४६ |
| वृषपुंगवल ... ... | २३ |
| **श.** | |
| [17]शरदीव ... ... | २५३ |
| [18]शशी दिवस ... ... | २०४ |
| [19]शुद्धान्तदुर्लभ ... ... | ९९ |
| शैलेन्द्रप्रतिपाद्य ... ... | २१८ |
| **स.** | |
| [20]स एकस्त्रीणि ... ... | १६१ |
| [21]संकेतकाल ... ... | २१८ |


१. विक्रमाङ्कदेवचरिते । २. राजानकरत्नाकरस्य हरविजये। ३. वेणीसंहारे । ४. रुद्रटस्य काव्यालंकारे । ५. औचित्यविचारचर्चायां बौद्धस्य धर्मकीर्तेः । ६. खण्डप्रशस्तौ । ७. भासकवेः चारुदत्तनाटके, मृच्छकटिकेऽपि । ८. बालरामायणे । ९. शिशुपालवधे । १०. सूर्यशतके मयूरस्य । ११. मयूरस्य । १२. रुद्रटस्य काव्यालंकारे । १३. मयूरस्य । १४. शिशुपालवधे । १५. नवसाहसाङ्कचरिते । १६. कुमारसंभवे । १७. नवसाहसाङ्कचरिते । १८. भर्तृहरेर्नीतिशतके । १९. अभिज्ञानशाकुन्तले । २०. ध्वन्यालोकलोचने । २१. ध्वन्यालोके ।

| | | |
|---|---|---|
| | | पृ० |
| [1]संग्रामाङ्गन | ... ... | १७९ |
| [2]संचारपूतानि | ... ... | ९२ |
| सच्छायाम्भोज | ... ... | ४० |
| [3]सञ्जातपत्र | ... ... | ८९ |
| [4]सत्पूरुषद्योति | ... ... | २५५ |
| [5]सद्यः करस्पर्श | ... ... | १६५ |
| सद्यः कौशिक | ... ... | १३० |
| स वः पायादिन्दुः | ... ... | ७४ |
| [6]स वक्तुमखि | ... ... | १५१ |
| [7]सहसा विदधीत | ... ... | १४० |
| सह्याः पन्नग | ... ... | २६ |
| साधूनामुपकर्तुं[8] | ... ... | ९३ |
| | | पृ० |
| [9]सा बाला वय | ... ... | १६४ |
| [10]साहित्यपाथो | ... ... | १५० |
| सीमानं न जगाम | ... ... | ११५ |
| सुहृअ विलम्बसु | ... ... | १४७ |
| सैषा स्थली | ... ... | ७४ |
| सौजन्याम्बु | ... ... | ४९ |
| [11]स्पृष्टास्ता नन्दने | ... ... | १४२ |
| [12]स्वपक्षलीला | ... ... | ११५ |
| स्वेच्छोपजात | ... ... | १२३ |
| **ह.** | | |
| [13]हा राहौ शित | ... ... | २२२ |
| [14]हृदयमधिष्ठित | ... ... | ८८ |
| [15]हे हेलाजित | ... ... | १४३ |

१. सदुक्तिकर्णामृते । २. रघुवंशे । ३. विक्रमाङ्कदेवचरिते । ४. नवसाहसाङ्कचरिते । ५. नवसाहसाङ्कचरिते । ६. ध्वन्यालोके । ७. किरातार्जुनीये । ८. अमरुशतके; सुभाषितावलौ तु कल्याणदत्तस्य । ९. विक्रमाङ्कदेवचरिते । १०. रघुवंशे । ११. मेण्ठस्य हयग्रीववधे । १२. मङ्खस्य श्रीकण्ठचरिते । १३. मयूरस्य । १४. कुट्टनीमते । १५. भर्तृहरेर्वाक्यपदीयटीकायां पुञ्जराजः ।

अग्निवेशकृता चरकदृढबलाभ्यां प्रतिसंस्कृता

## चरकसंहिता ।

चक्रपाणिदत्तविरचितया आयुर्वेददीपिकाव्याख्यया समलङ्कृता ।

मूल्यम् रू. ८ प्रे. व्य. रू. १।

---

श्रीमहर्षिसुश्रुतप्रणीता

## सुश्रुतसंहिता ।

वैद्यवर-श्रीडल्हणाचार्यविरचितया निबन्धसङ्ग्रहाख्यव्याख्यया निदानस्थानस्य श्रीगयदासविरचितया न्यायचन्द्रिकाख्यपञ्जिकाव्याख्यया च समुल्लसिता ।

अयं ग्रन्थो भगवतो धन्वन्तरेरुपदेशानुगुणं महर्षिश्रीसुश्रुतप्रणीतोऽखिलायुर्वेदनिबन्धेषु मूर्धन्यमणित्वेन वरीवर्ति । निबन्धकृद्धृदयप्रकाशनाय वैद्यवर-डल्हणाचार्यरचिता व्याख्यापि सर्वाङ्गसुन्दरत्वेन विराजते । परं च संप्रति निदानस्थानस्य गयदासप्रणीतपञ्जिकाव्याख्यया च समलङ्कृतोऽयं सर्वाङ्गसुन्दरो ग्रन्थः सर्वेषां सुखावबोधकः स्यात् ।

मूल्यम् रू. १० प्रे. व्य. रू. १॥

प्राप्तिस्थानम्—पाण्डुरङ्ग जावजी,
निर्णयसागरमुद्रणालयाध्यक्षः,
मुंबई नं. २

---